श्रीअजितबलायै विज्ञप्तिः—

श्रेयःपरागनलिनी नयतां नवाङ्गी
सा मे परा'ऽजितबला' दुरितानि तान्तम् ।
कल्याणकोटिमकरोन्निकरे नराणां
सामे पराजितबलाऽदुरिता नितान्तम् ॥ ४ ॥ २ ॥

## ३ श्रीसम्भवजिनस्तुतयः ।

अथ श्रीसम्भवनाथाय प्रार्थना—

या दुर्लभा भवभृतामृमुवल्लरीव
मानामितद्रुमहिमाभ ! जितारिजात ! ।
श्री'सम्भवे'श ! भवभिद् भवतोऽस्तु सेवा—
ऽमाना मितद्रुमहिमाभ ! 'जितारि'जात ! ॥ १ ॥

निखिलजिनवराणां नुतिः—

नाशं नयन्तु जिनपङ्काजिनीहृदीशा
निष्कोपमानकरणानि तमांसि तानि ।
ज्ञानच्युता बहुभवभ्रमणेन तप्त—
निष्कोपमानकरणा नितमां सितानि ॥ २ ॥

श्रीसिद्धान्तस्वरूपम्—

सिद्धान्त ! सिद्धपुरुषोत्तमसंप्रणीतो
विश्वावबोधक ! रणोदरदारधीरः ।
भव्यानपायजलधेः प्रकटस्वरूप—
विश्वाऽव बोधकरणोऽदरदारधीरः ॥ ३ ॥

श्रीदुरितार्यै विनतिः—

माकन्दमञ्जरिरिवान्यभृतां भरैर्या
देवैरसेवि 'दुरितारि'रसावलक्षा ।
दारिद्र्यकृन्मम सपत्नजनेऽतिदुःख-
दे वैरसे विदुरितारिरसा वलक्षा ॥ ४ ॥ ३ ॥

## ४ श्रीअभिनन्दनजिनस्तुतयः ।



अथ श्रीअभिनन्दननाथस्य स्तुतिः—

निःशेषसत्त्वपरिपालनसत्यसन्धो
भूपाल'संवर'कुलाम्बरपद्मबन्धो ! ।
कुर्वन् कृपां भवभिदे जिन ! मे विनम्र-
भूपाल संवरकुलां वरपद्म ! बन्धो ! ॥ १ ॥

तीर्थराजस्तवनम्—

यत्पाणिजव्रजमभाद् धुतबुद्धनीर-
जं बालघर्मकरपादसमस्तपद्मम् ।
तं नौमि तीर्थकरसार्थ ! भवन्तमेनो-
जम्बालघर्म ! करपादसमस्तपद्मम् ॥ २ ॥

जिनमतप्रशंसा—

कामं मते जिनमते रमतां मनो मे-
ऽमुद्दामकामभिदसंवरहेतुलाभे ।
चण्डद्युताविव वितन्वति सत्प्रकाश-
मुद्दामकामभिदसंवरहेऽतुलाभे ॥ ३ ॥

रोहिणीदेव्याः स्तुतिः—

धर्मोद्विषां क्षयमधर्मजुषां करोतु
सा 'रोहिणी' सुरभियातवपू रमाया।
यस्या बभौ हृदयवृत्तिरजस्रमूना
सारोहिणी सुरभिया तव पू रमायाः ॥ ४ ॥ ४ ॥

## ५ श्रीसुमतिजिनस्तुतयः ।

अथ श्रीसुमतिनाथस्य महिमा—

भक्तिर्मजेन विहिता तव पादपद्म-
सत्काऽमिता सुमनसां 'सुमते !' नतेन।
लब्धा सुखेन जिन ! सिद्धिसमृद्धिवृद्धिः
सत्कामिता सुमनसां सुमतेन तेन ॥ १ ॥

जिनवरेभ्यः प्रार्थना—

येषां स्तुवन्त्यपि ततिश्चरणानि नृणा-
मज्ञानघस्मरपराभवभा जिना वः।
दुःखाम्बुधाविव घन मरुतः क्षिपन्ता-
मज्ञाऽनघस्मरपरा भवभाञ्जि नावः ॥ २ ॥

जिनवाण्या माहात्म्यम्—

या हेलया हतवती कुमतिं कुपक्षै-
र्विज्ञा नराऽजितपदा शिवरा जिनेन।
वाचं तमस्सु रचितां हृदि धेहि शैल-
विज्ञानराजितपदां शिवराजिनेनम् ॥ ३ ॥

श्रीकालीदेव्या स्तुतिः—

उद्यद्गदा मृगमदाविलकज्जलाङ्ग—
काली सुरीतिमतिरा जितराजदन्ता ।
मुष्णातु मर्मजननीमनिशं मुनीनां
'काली' सुरीतिमतिराजितराजदन्ता ॥ ४ ॥ ५ ॥

---

## ६ श्रीपद्मप्रभजिनस्तुतयः ।

अथ श्रीपद्मप्रभस्य प्रार्थना—

भव्याङ्गिवारिजविबोधरविर्नवीन—
पद्मप्रभेशकरणोऽर्जितमुक्तिकान्तः ।
त्वं देहि निर्वृतिसुखं तपसा विभञ्जन्
'पद्मप्रभे'श ! करणोर्जितमुक्तिकान्तः ॥ १ ॥

जिनसमुदायस्य स्तुतिः—

सिद्धिं सतां वितर तुल्यगते ! गजस्य
विध्वस्तमोहनतमा नवदानवारेः ।
तीर्थङ्करव्रज ! दधद् वदनं विभास्त—
विध्वस्तमोह ! नतमानवदानवारे ! ॥ २ ॥

जिनागमस्य स्तुतिः—

गम्भीरशब्दभर ! गर्वितवादिघूक—
वीथीकृतान्तजनकोपम ! हारिशान्तिः ।
त्रायस्व मां जिनपतेः प्रवरापवर्ग—
वीथी कृतान्त ! जनकोपमहारिशान्तिः ॥ ३ ॥

श्यामायाः स्तुतिः—

या सेव्यते स्म दनुजैर्वरदायिवक्त्र-
श्यामावरा सुरवशोचितदैत्यरामा ।
श्यामं निरस्यतु ममेयमनन्तशोकं
'श्यामा' वरा सुरवशोचितदैत्य रामा ॥ ४ ॥ ६ ॥

---

## ७ श्रीसुपार्श्वजिनस्तुतयः ।

श्रीसुपार्श्वनाथस्य सेवायाः फलम्—

यं प्रास्तवीदतिशयानमृताशनानां
कान्ता रसारसपदं परमानवन्तम् ।
विज्ञः श्रियं भजति कां न नतः 'सुपार्श्वं'
कां तारसारसपदं परमानवन्तम् ? ॥ १ ॥

जिनपतिभ्यः प्रणामः—

निःशेषदोषरजनीकजिनीशमात-
संसारपारगतमण्डलमानमारम् ।
प्राज्यप्रभावभवनं भुवनातिशायि-
सं सारपारगतमण्डलमानमारम् ॥ २ ॥

प्रवचनप्रणामः—

सर्वार्थसार्थखचितं रचितं यतीन्द्र--
भारा ! जिनेन मतमानतमानवेनम् ।
हेलावहेलितकुकर्म शिवाय शर्म-
भाराजिने नमत मानतमानवेनम् ॥ ३ ॥

शान्तादेव्याः स्तुतिः—

भक्तिं बभार हृदये जिनसामजानां
शान्ताशिवं शमवतां वसुधामदेहा ।
सीमन्तिनी क्रतुभुजां कुरुतां सदा सा
'शान्ता' शिवं शमवतां वसुधामदेहा ॥ ४ ॥ ७ ॥

---

## ८ श्रीचन्द्रप्रभजिनस्तुतयः ।

अथ श्रीचन्द्रप्रभप्रभोः प्रार्थना—

पूज्यार्चितश्चतुरचित्तचकोरचक्र-
चन्द्र ! प्रभावभवनं दितमोहसारः ।
संसारसागरजले पुरुषं पतन्तं
'चन्द्रप्रभा'व भवनन्दितमोहसारः ॥ १ ॥

तीर्थंकरनिकरप्रणिपातः—

तीर्थेशसार्थ ! नतिरस्तु भवत्युदारा-
ऽऽरम्भागसामज ! समाननतारकान्ते ! ।
सन्दोहराहुबलनिर्मथने तमःसं-
रम्भागसामजसमान ! नतारकान्ते ॥ २ ॥

जिनवाण्याः स्तुतिः—

सम्यग्दृशामसुमतां निचये चकार
सद्भा रतीरतिवरा मरराजिगे या ।
दिश्यादवश्यमखिलं मम शर्म जैनी
सद्भारती रतिवरामरराजिगेया ॥ ३ ॥

वज्राङ्कुशीदेव्याः स्तुतिः—

अध्यासिता नवसुधाकरबिम्बदन्तं
स्वानेकपं कमलमुक्तघनाघनाभम् ।
'वज्राङ्कुशी' दिशतु शं समुपात्तपुण्य-
स्वाऽनेकपङ्कमलमुक्तघना घनाभम् ॥ ४ ॥ ८ ॥

---

## ९ श्रीसुविधिजिनस्तुतयः ।

अथ श्रीसुविधिनाथस्य स्तुतिः—

निर्वाणमिन्दुयशसां वपुषा निरस्त-
रामाङ्गजोऽरुज ! गतः सुविधे ! निधे ! हि ।
विस्तारयन् सपदि शं परमे पदे मां
'रामा'ङ्गजोरु जगतः 'सुविधे !' निधेहि ॥ १ ॥

जिनसमूहस्य प्रार्थना—

संप्रापयन्नतिमतोऽसुमतोऽतिचण्ड-
भास्वन्महाः शिवपुरः सविधेऽयशस्तः ।
पायादपायरहितः पुरुषान् जिनौघो
भास्वन्महाः शिवपुरः सविधेयशस्तः ॥ २ ॥

जिनवचनविचारः—

ये प्रेरिताः प्रचुरपुण्यभरैर्विनम्रा-
पापायमानव ! सुधारुचिरङ्गतारम् ।
कुर्वन्तु ते हृदि भवद्वचनं व्यपास्त-
पापायमान ! वसुधारुचिरं गतारम् ॥ ३ ॥

सुतारकादेव्याः स्तुतिः—

त्वं देवते ! विशदवागविभवाभिभूत-
सारामृता समुदितास्यसुतारकेशा ।
नृणामुपप्लवचमूमुचितप्रदाने-
ऽसारामृता समुदिता स्य 'सुतारके'शा ॥ ४ ॥ ९ ॥

## १० श्रीशीतलजिनस्तुतयः ।



अथ श्रीशीतलनाथस्य स्तुतिः—

पीडागमो न परिजेतरि दत्तमर्त्या-
नन्दातनूद्भवभयायशसां प्रसिद्धे ! ।
चित्ते विवर्तिनि विशां भवति त्वयीश !
'नन्दा'तनूद्भव ! भया यशसां प्रसिद्धे ॥ १ ॥

जिनवरध्यानम्—

यच्चित्तवृत्तिरवधीत् तमसां प्रशस्ता-
या तापदं मनसि तारतमोरु जालम् ।
तं मानवप्रकर ! तीर्थकृतां कलापं
यातापदं मन सितारतमोरुजालम् ॥ २ ॥

सिद्धान्तस्य स्तुतिः—

गायन्ति सार्धममरेण यशस्तदीयं
रम्भा जिनागम ! दवारिहरे सवर्णे ।
ध्यानं धरन्ति तव ये पठने सदा सा-
रम्भाजिनागमदवारिहरेऽसवर्णे ॥ ३ ॥

अशोकादेव्याः स्तुतिः—

या भेजुषी जिनपदं न्यदधद् विशाला—
पत्रं परागमधुरं विगतामशोकाम् ।
स्मेराननां सुजन ! भो स्मर तां सहस्र—
पत्रे परागमधुरं विगता'मशोकाम्' ॥ ४ ॥ १० ॥

## ११ श्रीश्रेयांसजिनस्तुतयः ।

अथ श्रीश्रेयांसनाथाय नमः—

'श्रेयांस 'सर्वविदमङ्गिगण ! त्रियामा—
कान्ताननं तमहिमानम मानवाते ।
यं भेजुषो भवति यस्य गुणान् न यातं
कान्ताननन्तमहिमानममा नवा ते ॥ १ ॥

आप्तनिकरस्य स्तुतिः—

लक्ष्मीमितानभजतर्भुसदोऽङ्घ्रिशैल—
राजाननन्तमहिमप्रभवामकायम् ।
भिन्दन्तमाप्तनिकरं समुपैमि राका—
राजाननं तमहिमप्रभवामकायम् ॥ २ ॥

प्रवचनपरिचयः—

निर्वाणनिर्वृतिपुषां प्रचुरप्रमाद—
मारं भवारिहरिणा सममाऽऽगमेन ।
विद्वज्जनः परिचयं चिनुतां जिनाना—
मारम्भवारिहरिणा सममागमेन ॥ ३ ॥

मानवीदेव्याः स्तुतिः—

यस्याः प्रसादमधिगम्य बभूव भूस्पृक्
सारातुलाभममला यतिमानवीनः ।
शं तन्वती मतिमताममरी शिवानां
सा रातु लाभममलायति 'मानवी' नः ॥ ४ ॥ ११ ॥

## १२ श्रीवासुपूज्यजिनस्तुतयः ।

अथ श्रीवासुपूज्यनाथस्य स्तुतिः—

एनांसि यानि जगति भ्रमणार्जितानि
पर्जन्यदानवसुपूज्य ! सुतानवानि ।
त्वन्नाम तानि जनयन्ति जना जपन्तः
पर्जन्यदान ! 'वसुपूज्य 'सुतानवानि ॥ १ ॥

जिनराज्या ध्यानम्—

ध्यानान्तरे धरत धोरणिमीश्वराणां
वाचंयमा ! मरणदामितमोहनाशाम् ।
दत्तेहितां भगवतामुपकारकारि—
वाचं यमामरणदामितमोहनाशाम् ॥ २ ॥

शास्त्रमहिमा—

सोऽयं हिनस्ति सुकृती समवाप्य शास्त्र—
विद्यातरो गवि भवं भवतोदि तारम् ।
श्रोत्रैर्वचोऽमृतमधादिह सर्वभाव—
विद् ! यातरोगविभवं भवतो दितारम् ॥ ३ ॥

चण्डादेव्याः स्तुतिः—

भक्त्या यया यतिगणः समपूजि भिन्न-
चण्डेतिकोऽमलकले ! वरशोभनाभे ! ।
पण्डामखण्डिततमां घटयाशु पुंसां
'चण्डे' ! ऽतिकोमलकलेवरशोभनाभे ! ॥ ४ ॥ १२ ॥

---

## १३ श्रीविमलजिनस्तुतयः ।

---

अथ श्रीविमलनाथस्य स्तुतिः—

सिंहासने गतमुपान्तसमेतदेव-
देवे हितं सकमलं 'विमलं' विभासि ।
आनर्च यो जिनवरं लभते जनौघो
देवेहितं स कमलं विमलं विभासि ॥ १ ॥

तीर्थंकराणां स्तुतिः—

ते मे हरन्तु वृजिनं भवतां नियोगा-
येऽनर्थदं भविरतिप्रियदा नदीनाः ।
तीर्थाधिपा वरदमं दधिरे दयाया
येऽनर्थदम्भविरतिप्रियदा नदीनाः ॥ २ ॥

प्रवचनप्रशंसा—

दूरीभवन् भवभृतां पृथु सिद्धिसौधं
सिद्धान्तराम ! नय मा नयमालयानाम् ।
यं त्वां बभार हृदये शमिनां समूहः
सिद्धान्त ! रामनयमानयमालयानाम् ॥ ३ ॥

विदितादेव्याः स्तुतिः—

सा कल्पवल्लिरिव वोऽस्तु सुरी सुखाय
रामासु भासिततमा 'विदिता'ऽमितासु ।
श्रेणीषु या गुणवतां करुणां सरागा
रामा सुभा सिततमा विदितामितासु ॥ ४ ॥ १३ ॥

---

## १४ श्रीअनन्तजिनस्तुतयः ।

अथ श्रीअनन्तनाथस्य प्रार्थना—

प्रज्ञावतां तनु तमस्तनुतामनन्त—
माऽऽयासमेतपरमोहमलो भवन्तम् ।
स्याद्वादिनामधिपते ! महता'मनन्त' !
मायाऽसमेत ! परमोहमलोभवन्तम् ॥ १ ॥

तीर्थङ्करनिकरस्य विज्ञप्तिः—

चक्रे मराल इव यो जगतां निवासं
कामोदितावनिधनादृत ! मानसे नः ।
ऊर्वीमिवावनिवरो व्रज ! तीर्थपानां
कामोदिताव निधनादृतमानसेनः ॥ २ ॥

प्रवचनस्य विनतिः—

स त्वं सतत्त्व ! कुरु भक्तिमतामनन्यां
यामागमोहसदनं ततमोदमारम् ।
यश्चिन्तितार्थजनको यमिनां जघान
यामागमो हसदनन्ततमोदमारम् ॥ ३ ॥

अङ्कुशीदेव्या अभ्यर्थना—

या वर्जितं व्रजमुदारगुणैर्मुनीना-
मस्ताघमानमति रङ्गमना दरेण ।
शर्म'ाङ्कुशी' दिशतु सा मम मङ्गलाना-
मस्ताघमानमतिरङ्गमनादरेण ॥ ४ ॥ १४ ॥

---

## १५ श्रीधर्मजिनस्तुतयः ।

अथ श्रीधर्मनाथाय नमनम्—

सद्धर्म ! 'धर्म !' भवतु प्रणतिर्विमुक्त-
मायाय ते तनुभवाय धरशे' भानोः' ।
यस्याभिधानमभवद् भविनां पवित्र-
मायायते ! ऽतनुभवाय धरेशभानोः ॥ १ ॥

जिनपङ्क्त्याः स्तुतिः—

दन्दह्यते स्म दमहव्यभुजा जिनाली
संपन्नरागमरमानवनी रदाभाः ।
कीर्तीः करोतु दधती कुशलानि सा सत्-
सम्पन्नरागमरमानवनीरदाभा ॥ २ ॥

जिनवाण्या विचारः—

वाचंयमैर्धृतवती धरणीव गुर्वी
सत्कामसङ्गमरसाजरसोपमाना ।
सा वाक् सतां व्यथयतु प्रथितं जिनेन्द्र-
सत्काऽऽमसङ्गमरसा जरसोऽपमाना ॥ ३ ॥

---

१ 'यमैरवधृता' इत्यपि पाठः ।

प्रज्ञप्तिदेव्याः स्तुतिः—

संप्रापयत्यसुमतः कविकोटिकाम्यां
प्रज्ञप्तिकामितरसाममरोचिता या ।
सा केकिनं गतवती द्यतु दुष्टदोषान्
'प्रज्ञप्तिका'ऽमितरसा मम रोचिताया ॥ ४ ॥ १५ ॥

---

## १६ श्रीशान्तिजिनस्तुतयः ।



अथ श्रीशान्तिनाथस्य स्तुतिः—

यं स्तौति 'शान्ति'जिनमिन्द्रततिर्नितान्तं
श्रीजातरूपतनुकान्तरसाभिरामम् ।
शान्तिं सुरीभिरभिनूत ! नुदन् स नुन्न-
श्रीजातरूप ! तनु कान्तरसाभिरामम् ॥ १ ॥

जिनेश्वरेभ्यः प्रार्थना—

राजीभिरर्चितपदाऽमृतभोजनानां
मन्दारवारमणिमालितमस्तकानाम् ।
पुंसां ददातु कुशलं जिनराजमाला-
ऽमन्दारवाऽरमणिमालितमस्तकानाम् ॥ २ ॥

जिनागमस्य माधुर्यम्—

यो गोस्तनीमधुरतां निजहार हानि-
च्छिन्नाशिताजिनवरागमहारिवार ! ।
माधुर्यमेति न तवाधिशुचौ मधुत्व-
च्छिन्ना सिता जिनवरागम ! हारिवारः ॥ ३ ॥

निर्वाणीदेव्याः स्तुतिः—

श्री'आचिरेय'चरणान्तिकसक्तचित्ता
निर्वाणिनी रसनरोचितदेहकान्ता ।
मां शर्मणां पृथु विधेहि गृहं सुराणां
'निर्वाणि'! नीरसनरोचितदेह कान्ता ॥ ४ ॥ १६ ॥

---

## १७ श्रीकुन्थुजिनस्तुतयः ।

अथ श्रीकुन्थुनाथस्य स्तुतिः—

मां 'कुन्थु'नाथ ! शमथावसथः प्रकृष्ट-
स्थानं दमाय नय मोहनवारिराशेः ।
मध्येऽम्बुनाथतुलनां कलयन्ननल्पा-
स्थानन्दमाय ! नयमोहनवारिराशेः ॥ १ ॥

तीर्थपतीनां स्मरणम्—

नित्यं वहेम हृदये जिनचक्रवाल-
मानन्ददानमहितं नरकान्तकारि ।
मुक्ताकलापमिव हारिगुणं धुनानं
मानं ददानमहितं नरकान्तकारि ॥ २ ॥

जिनवाण्याः प्रशंसा—

वाचां ततिर्जिनपतेः प्रचिनोतु भद्रं
भ्राजिष्णुमा नरहिताऽकलिताऽपकारैः ।
सेव्या नरैर्धवलिमास्तसुधासुधाभा-
भ्राऽजिष्णुमानरहिता कलितापकारैः ॥ ३ ॥

बलादेव्याः स्तुतिः—

या जातु नान्यमभजज्जिनराजपाद—
द्वन्द्वं विना शयविभाकरराजमाना ।
हे श्री'बले' ! वरबले ! समसङ्घकस्य
द्वन्द्वं विनाशय विभाकरराजमाना ॥ ४ ॥ १७ ॥

---

## १८ श्रीअरजिनस्तुतयः ।

अथ श्रीअरनाथस्य सेवा—

पीठे पदोर्लुठति यस्य सुरालिरग्र—
सेवे सुदर्शनधरेऽशमनं तवामम् ।
त्वां खण्डयन्त'मर.'! तं परितोषयन्तं
सेवे 'सुदर्शन'धरेशमनन्तवामम् ॥ १ ॥

जिनाल्या विज्ञप्तिः—

सर्वज्ञसंहतिरवाप शिवस्य सौख्यं
सारं भवारिजनिशापतिरोहितश्रीः ।
शुद्धां धियं कृतधियां विदधातु नित्यं
साऽऽरम्भवारिजनिशापतिरोहितश्रीः ॥ २ ॥

जिनवाण्याः प्रार्थना—

हन्ति स्म या गुणगणान् परिमोचयन्ती
साभा रतीशमवतां भवतोदमायाः ।
ज्ञानश्रिये भवतु तत्पठनोद्यतानां
सा भारती शमवतां भवतो दमाया ॥ ३ ॥

चक्रधरादेव्याः स्तुतिः—

चञ्चद्विलोचनमरीचिचयाभिभूत—
सारङ्गता स्फटिकरोचितभालकान्ता ।
चक्रं सतामवतु ' चक्रधरा ' सुपर्णे
सारं गता स्फटिकरोचितभालकान्ता ॥ ४ ॥ १८ ॥

## १९ श्रीमल्लिजिनस्तुतयः ।

अथ श्रीमल्लिनाथस्य स्तुतिः—

श्रीमल्लिनाथ ! शमथद्रुमसेकपाथः
कान्तप्रियङ्गुरुचिरोचितकायतेजः ! ।
पादाब्जमस्तु मदनार्त्तिमधौ विमुक्ता-
कान्त ! प्रियं गुरु चिरोचितकाय तेऽज ! ॥ १ ॥

स्याद्वादिश्रेण्याः स्तुतिः—

स्याद्वादिनां ततिरनन्यजमिन्दुकान्ता-
च्छा या विडम्बयति सन्तमसङ्गमानाम् ।
सा सेवधिः प्रविधुनोतु कृतप्रकाश-
च्छायाविड(ल)म्बयति सन्तमसं गमानाम् ॥ २ ॥

जिनवाक्चन्द्रिकाया महिमा—

सङ्कोचमानयति या गृहमस्तमोहा-
नायाऽसमानममतामरसं स्तवानाम् ।
वाक्चन्द्ररुग् घतु तमोभरमर्हताम-
नायासमानममतामरसंस्तवानाम् ॥ ३ ॥

धरणप्रियायाः स्तुतिः—

श्रीजैनशासनहिता निखिलाहिताली-
संभिन्नतामरसभा सुरभासमाना ।
देवी दुनोतु दुरितं 'धरण'प्रिया वः
संभिन्नतामरसभासुरभा[1] समाना ॥ ४ ॥ १९ ॥

---

## २० श्रीमुनिसुव्रतजिनस्तुतयः ।



अथ श्रीमुनिसुव्रतनाथस्य स्तुतिः—

सीमन्तिनीमिव पतिः समगंस्त सिद्धिं
निर्माय विस्मितमहामुनि सुव्रतत्वम् ।
सोऽयं मम प्रतनुतात् तनुतां भवस्य
निर्माय ! विस्मितमहा 'मुनिसुव्रत !' त्वम् ॥ १ ॥

जिनेश्वराणां स्तुतिः—

दीक्षां जवेन जगृहुर्जिनपा विमुच्य
कान्तारसं गतिपराजितराजहंसाः ।
ते मे सृजन्तु सुषमां यशसा सुकीर्त्ति-
कां तारसङ्गतिपरा जितराजहंसाः ॥ २ ॥

जिनागमाय महादेवस्योपमा—

दुर्दान्तवादिकुमत'त्रिपुरा'भिघाते
कामारिमानम मतं पृथु लक्षणेन ।
सर्वज्ञशीतरुचिना रचितं निरस्त-
कामारिमानममतं पृथुलक्षणेन ॥ ३ ॥

---

१ 'भाऽसमाना' इत्यपि पाठः ।

गौरीदेव्याः स्तुतिः—

या दुर्धियामकृत दुष्कृतकर्ममुक्ता-
ऽनालीकभञ्जनपराऽस्तमरालवाला ।
गत्याऽऽस्यमस्यतु तमस्तव 'गौर्य'वन्ती
नालीकभं जन ! परास्तमरालबाला ॥ ४ ॥ २० ॥

## २१ श्रीनमिजिनस्तुतयः ।

अथ श्रीनमिनाथस्य नुतिः—

देवन्द्रवृन्दपरिसेवित ! सत्त्वदत्त-
सत्यागमो मदनमेघमहानिलाभः ।
मथ्नासि नाथ ! रतिनाथसरूपरूपः
सत्यागमोऽमद ! 'नमे !'ऽघमहानिलाभः ॥ १ ॥

जिनश्रेण्याः स्मरणम्—

पापप्रवृत्तिषु पराणि निवर्तयन्त्य-
सत्यासु खानि शिवसङ्गमनाददाना ।
जैनेन्द्रपङ्क्तिरुपयातु मदीयचित्ते
सत्या सुखानि शिवसङ्गमना ददाना ॥ २ ॥

प्रवचनस्य विजयः—

यूथं ममन्थ हरिरैभमिवाधिमस्त-
मायामहारिमदनं दितदानवारि ।
जैनं मतं विजयतां तदिदं गमाना-
मायामहारि मदनान्दितदानवारि ॥ ३ ॥

कालीदेव्याः स्तुतिः—

या 'काल्य'किञ्चनजनानतनोदिताऽब्जं
प्रत्यर्थिनो विशदमानगदाऽक्षमाला ।
सा देवता प्रथयतु प्रथितप्रभावा
प्रत्यर्थिनो विशदमानगदाक्षमाला ॥ ४ ॥ २१ ॥

---

## २२ श्रीनेमिजिनस्तुतयः ।

अथ श्रीनेमिनाथाय प्रणामः—

यो रैवताख्यगिरिमूर्ध्नि तपांसि भोग-
राजीमतीत्य जनमारचयां चकार ।
'नेमिं' जना ! नमत यो विगतान्तरारी
'राजीमती'त्यजनमारचयाञ्चकार ॥ १ ॥

जिनाधिपाना स्तुतिः—

यज्ज्ञानसारमुकुरे प्रतिबिम्बमीयु-
र्भावालयो गणनया रहिता निशाते ।
मेधाविनां स भगवन् ! परमेष्ठिनां श्री-
भावालयो गण ! नयारहितानि शाते ॥ २ ॥

सिद्धान्तस्य शोभा—

निर्मापयन्त्यखिलदेहजुषां निषेधं
सारा विभाति समतापर ! मारणस्य ।
सिद्धान्त ! सिद्धरचितस्य तवोग्रतत्त्व-
सारा विभाऽतिसमतापरमारणस्य ॥ ३ ॥

अम्बिकादेव्याः स्तुतिः—

प्राप्ता प्रकाशमसमद्युतिभिर्निरस्त-
ताराविभावसुमतोदमहारिबन्धा ।

भक्ता'ऽम्बिका'ऽमरवशाऽवतु 'नेमि'सार्वे–
तारविभावसुमतो दमहारिबन्धा ॥ ४ ॥ २२ ॥

## २३ श्रीपार्श्वजिनस्तुतयः ।

अथ श्रीपार्श्वनाथस्य स्तुतिः—

श्री'पार्श्व'यक्षपतिना परिसेव्यमान–
पार्श्वे भवामितरसादरलाङ्गलाभे ।
इन्दीवरेऽलिरिव रागमना विनीले
' पार्श्वे ' भवामि तरसा दरलाङ्गलाभे ॥ १ ॥

जिनपङ्क्त्याः प्रार्थना—

श्यामासुधाकरसुवर्णवरेन्द्रनील–
राजीवराजिततराङ्गधराऽतिधीरा ।
श्रेयःश्रियं सृजतु वो जिनकुञ्जराणां
राजी वराऽजिततराऽङ्ग धरातिधीरा ॥ २ ॥

जिनवाण्याः स्मरणम्—

या स्तूयते स्म जिनवाग् गहनार्थसार्थै
राज्याऽऽयता मघवतां समया तमोहाम् ।
दूरस्थितां स्मृतिपथं कुरु मुक्तिपुर्या
राज्याय तामघवतां समयातमोहाम् ॥ ३ ॥

पद्मावतीदेव्याः स्तुतिः—

छायेव पूरुषमसेवत 'पार्श्व'पाद–
पद्मावतीहितरसाजवनोपमाना ।
सा मे रजांसि हरतादिव गन्धवाहः
' पद्मावती ' हि तरसा जवनोऽपमाना ॥ ४ ॥ २३ ॥

## २४ श्रीवीरजिनस्तुतयः ।



अथ श्रीवीरनाथस्य स्तुतिः—

'सिद्धार्थ'वंशभवनेऽस्तुत यं सुराली
हृद्या तमोहमकर ! ध्वजमानतारे ! ।
त्वां नौमि 'वीर !' विनयेन सुमेरुधीरं
हृद्यातमोहमकरध्वजमान ! तारे ॥ १ ॥

जिनश्रेण्या नुतिः—

यत्पादपद्ममभवत् पततां भवाब्धा-
वालम्बनं शमधरी कृतकामचक्रा ।
त्वं जैनराजि ! सृज मञ्जुशिवद्रुमाणां
बालं वनं शमधरीकृतकामचक्रा ॥ २ ॥

जिनागमस्य स्तुतिः—

कादम्बिनीव शिखिनामतनोदपास्ता-
रामारमा मतिमतां तनुतामरीणाम् ।
जैनी नृणामियममर्त्यमणीव वाणी
रामा रमामतिमतां तनुतामरीणाम् ॥ ३ ॥

अम्बिकादेव्या नुतिः—

सम्यग्दृशां सुखकरी मदमत्तनील-
कण्ठीरवाऽसि ततनोदितसाक्षमाला ।
दे'व्यम्बिके' ! शिवमियं दिश पण्डितानां
कण्ठीरवासिततनो ! ऽदितसा क्षमाला ॥ ४ ॥ २४ ॥



॥ ऐं नमः ॥

श्रीमत्पण्डितमेरुविजयगणिविरचिताः स्वोपज्ञविवरणयुताः

# श्रीचतुर्विंशतिजिनानन्दस्तुतयः

## १ श्रीऋषभजिनस्तुतयः

अथ श्रीनाभिनन्दनस्य नुतिः—

आनन्दमन्दिरमुपैमि तमृद्धिविश्व-
नाभेय! देवमहितं सकलाभवन्तम् ।
लब्ध्वा जयन्ति यतयो भवयोधमादौ
'नाभेय'देवमहितं सकला भवन्तम् ॥ १ ॥

—वसन्ततिलका ( ८, १ )

### विवरणम्

नत्वा महिमनिधानं, स्वगुरुं विवृणोति मेरुविजयकविः ।
स्वोपज्ञचतुर्विंशति-नुतीर्जिनानां यमकविषयाः ॥–आर्या[१]

तं–जिनं अहं उपैमि–श्रये । तं किंविशिष्टं ? आनन्दस्य–हर्षस्य गृहम् । पुनः किं० ? देवैर्महितं–पूजितम् । पुनः ( किंवि० ) केन–सुखेन सहितो लाभः–प्राप्तिस्तद्वन्तम् । ऋद्धिः–सम्पत् तद्रूपविश्वे–जगति ब्रह्मा तत्संबोधनम् । तं कं ? यं भवन्तं लब्ध्वा–प्राप्य यतयो भवयोधं–संसारभटं जयन्ति । क्व ? आदौ–युगादौ । यं किंविशिष्टं ? नाभेयदेवं–वृषभनामानम् । भवयोधं किंविशिष्टं ? अहितं–दुःखदम् । यतयः किंविशिष्टाः ? सकलाः–सर्वे ॥ १ ॥

### अन्वयः

( हे ) ऋद्धि–विश्व–नाभेय ! ( यं ) भवन्तं नाभेय–देवं आदौ लब्ध्वा सकलाः यतयः अ-हितं भव–योधं जयन्ति, तं आनन्द–मन्दिरं, देव–महितं स–क–लाभ–वन्तं उपैमि ।

---

१ आर्या–लक्षणम्—

"यस्याः पादे प्रथमे, द्वादश मात्रा तथा तृतीयेऽपि ।
अष्टादश द्वितीये, चतुर्थके पञ्चदश साऽऽर्या ॥"

## શબ્દાર્થ

आनन्द=હર્ષ.
मन्दिर=ગૃહ, ઘર.
आनन्दमन्दिरं=હર્ષના ગૃહ ( રૂપ ).
उपैमि ( ધાતુ इ )=હું આશ્રય લઉં છું.
तं ( મૂલ तद् )=તેને.
ऋद्धि=સંપત્તિ.
विश्व=બ્રહ્માણ્ડ, જગત.
नाभेय=બ્રહ્મા.
ऋद्धिविश्वनाभेय !=હે સંપત્તિરૂપ વિશ્વને વિષે બ્રહ્માસમાન !
देव=દેવ, સુર.
महित ( ધા૦ मह )=પૂજિત.
देवमहितं=દેવો વડે પૂજિત.
सह=સહિત.
क=સુખ.
लाभ=લાભ, પ્રાપ્તિ.
सकलाभवन्तं=સુખપૂર્વક લાભયુક્ત.
लब्ध्वा ( ધા૦ लभ् )=પ્રાપ્ત કરીને, મેળવીને.
जयन्ति ( ધા૦ जि )=જીતે છે.
यतयः ( મૂ૦ यति )=સાધુઓ, મુનિવરો.
भव=સંસાર.
योध=સુભટ, યોદ્ધો.
भवयोधं=સંસારરૂપ સુભટને.
आदौ ( મૂ૦ आदि )=શરૂઆતમાં.
नाभेय=નાભિ(નરેશ)ના નન્દન, ઋષભ દેવ.
नाभेयदेवं=ઋષભદેવને, પ્રથમ તીર્થંકરને.
हित=હિતકારી, કલ્યાણકારી.
अहितं ( મૂ૦ अहित )=અહિતકારી, અનિષ્ટ.
सकलाः ( મૂ૦ सकल )=સર્વે, સમસ્ત.
भवन्तं ( મૂ૦ भवत् )=આપને.

## શ્લોકાર્થ

### શ્રીનાભિ-નન્દનની સ્તુતિ—

"હે સંપત્તિરૂપ બ્રહ્માણ્ડને વિષે બ્રહ્માસમાન ( અર્થાત્ સંપત્તિરૂપ વિશ્વના ઉત્પાદક)! ( ધર્મ-પ્રવર્તનની ) શરૂઆત[1]માં જે આપ નાભિ-નન્દન ( અર્થાત્ ઋષભપ્રભુ )ને પ્રાપ્ત કરીને સમસ્ત મુનિવરો અહિતકારી એવા સંસારરૂપી સુભટને જીતે છે, તે આનંદના ગૃહરૂપ, દેવો વડે પૂજિત તેમજ સુખપૂર્વક ( જ્ઞાનાદિક ) લાભયુક્ત એવા આપ ( પ્રથમ જિનવર )નો હું આશ્રય લઉં છું."—૧

## સ્પષ્ટીકરણ

### પદ્ય-મીમાંસા—

આ ચતુર્વિંશતિજિનાનન્દસ્તુતિ ફક્ત વસંતતિલકા નામના એકજ વૃત્ત યાને છંદમાં રચવામાં આવી છે. અર્થાત્ આ સંપૂર્ણ કાવ્ય શ્રીશોભનમુનિ અને બપ્પભટ્ટિસૂરિજીની માફક વિધ વિધ વૃત્તોમાં ન રચતાં ફક્ત એકજ 'વસંતતિલકા' વૃત્તમાં શ્રીમેરુવિજયગણિએ રચ્યું છે. વિશેષમાં ઉપર્યુક્ત બે મુનિવરોએ રચેલી સ્તુતિઓને કેટલેક અંશે કાવ્ય-ચમત્કૃતિમાં મળતી

---

૧ ધર્મ-પ્રવર્તનની શરૂઆતમાં એટલે કે ધર્મનો વિચ્છેદ થયા બાદ ફરીથી ધર્મની પ્રવૃત્તિ થાય ત્યારે; અર્થાત્ યુગની આદિમાં એટલે કે ત્રીજા આરાના અંતમાં.

આવલી આ સ્તુતિમાં તો પ્રત્યેક શ્લોકનાં દ્વિતીય અને ચતુર્થ ચરણો મળતાં આવે છે; એ એની શોભામાં યમકની દૃષ્ટિએ વધારો કરે છે. વળી એક બીજી વાત પણ ધ્યાનમાં લેવા જેવી છે કે આ કવિરાજે તો પ્રથમજ શ્લોકમાં અને તે પણ વળી આદિમાં પોતાના ગુરૂના આનન્દવિજય-ગણિ એ નામનો નિર્દેશ કરવાપૂર્વક તેમનું સ્મરણ કર્યું છે; આ એની વિશિષ્ટતા સૂચવે છે.

હવે જ્યારે આ કાવ્ય વસંતતિલકા શ્લોકમાં રચાયેલું છે, તો પછી 'વસંતતિલકા'ના લક્ષણ પરત્વે કંઇક વિચાર કરવો એ અપ્રાસંગિક નહિ ગણાય.

હરેક પદ્ય કયાં તો અક્ષરના કે કયાં તો માત્રાના નિયમને અનુસરતું રચવામાં આવે છે. જે પદ્ય અક્ષરોના નિયમાનુસાર રચાયેલું હોય તેને વૃત્ત કહેવામાં આવે છે. આ વૃત્તના સમ, અર્ધ-સમ અને વિષમ એવા ત્રણ પ્રકારો પાડવામાં આવ્યા છે. જે વૃત્તનાં ચારે ચરણો (પાદ) એક એકની સાથે અક્ષર પરત્વે મળતાં આવતાં હોય, તે વૃત્ત 'સમવૃત્ત' કહેવાય છે; જ્યારે જેનાં પ્રથમ અને તૃતીય ચરણો તેમજ દ્વિતીય અને ચતુર્થ ચરણો પરસ્પર મળતાં આવતાં હોય, તે વૃત્તને 'અર્ધસમવૃત્ત' કહેવામાં આવે છે; અને જે વૃત્તનાં કોઈ પણ બે ચરણો અક્ષરના નિયમથી એકમેક સાથે મળતાં આવતાં ન હોય, તે વૃત્ત 'વિષમવૃત્ત' ના નામથી ઓળખાય છે. વળી સાધારણ રીતે વૃત્તમાં એકથી માંડીને તે વધારેમાં વધારે છવ્વીસ (૨૬) અક્ષરો હોય છે. આ અક્ષરોમાંના કેટલાક હ્રસ્વ અને કેટલાક દીર્ઘ ગણાય છે. જેમકે અ, ઇ, ઉ, ઋ અને ઌ એ હ્રસ્વ અક્ષરો છે, જ્યારે બાકીના આ, ઈ, ઊ, ૠ, એ, ઐ, ઓ અને ઔ એ દીર્ઘ અક્ષરો છે. આ ઉપરાંત એ ધ્યાનમાં રાખવું કે હ્રસ્વ અક્ષરની પછી અનુસ્વાર, વિસર્ગ કે જોડાક્ષર આવે, તો તે અક્ષર દીર્ઘ ગણાય છે, તેમજ પાદના અન્તનો હ્રસ્વ સ્વર પણ ક્વચિત્ ગુરૂ ગણાય છે. અમુક અક્ષર હ્રસ્વ છે કે દીર્ઘ છે અર્થાત્ તે 'લઘુ' છે કે 'ગુરૂ' છે, તે દર્શાવવા લ અને ગ એવા અક્ષરો તેમજ '⏑' અને '–' અથવા '।' અને 'ऽ' ચિહ્નો વપરાય છે. આ હ્રસ્વ-દીર્ઘ અક્ષરોમાંના ત્રણ ત્રણ અક્ષરના સમૂહને 'ગણ' કહેવામાં આવે છે. છન્દઃશાસ્ત્રમાં બતાવ્યા મુજબ એકંદર આઠ ગણો છે. આ સંબંધમાં નીચેનો શ્લોક વિચારવો ઉપયોગી થઈ પડશેઃ—

"'म' स्त्रिगुरुस्त्रिलघुश्च 'न' कारो
'मा'दिगुरुः पुनरादिलघु'र्यः' ।
'जो' गुरुमध्यगतो 'र' लमध्यः
'सो'ऽन्तगुरुः कथितोऽन्तलघु'स्तः' ॥"

અર્થાત્ મગણમાં ત્રણે અક્ષરો (વર્ણો) ગુરૂ હોય છે, જ્યારે નગણમાં તો ત્રણે લઘુ હોય છે; આદિ વર્ણ ગુરૂ હોય અને બાકીના બે લઘુ હોય, તો તે ભગણ છે; એવી રીતે પ્રથમ વર્ણ લઘુ હોય અને બાકીના બે ગુરૂ હોય, તો તે યગણ છે. એકલો મધ્ય વર્ણ ગુરૂ હોય તે જગણ છે અને એકલો મધ્ય વર્ણ લઘુ હોય તે રગણ છે. એકલો અન્ત્ય વર્ણ ગુરૂ હોય તે સગણ અને એવીજ રીતે એકલો અન્ત્ય વર્ણ લઘુ હોય તે તગણ છે.

**આઠ ગણોની સમજ—**

म (– – –), य (⏑ – –), र (– ⏑ –), स (⏑ ⏑ –), त (– – ⏑), ज (⏑ – ⏑), भ (– ⏑ ⏑), न (⏑ ⏑ ⏑).[1]

૧ સરખાવો સ્તુતિ-ચતુર્વિંશતિકા ( પૃ૦ ૮-૧૧ ).

વિશેષમાં દરેક છંદમાં યતિ એટલે વિશ્રામ-સ્થાન હોય છે અને તે દર્શાવવા । ( આવું ) ચિહ્ન કરવામાં આવે છે. વળી સાધારણ રીતે દરેક છન્દનું લક્ષણ તેજ છન્દના પાદમાં આપેલું હોય છે. તેવીજ રીતે **વસન્તતિલકા** વૃત્તનું લક્ષણ પણ તેજ વૃત્તમાં નીચે મુજબ આપવામાં આવ્યું છે:—

— — ⏑ — ⏑ ⏑ ⏑ — | ⏑ ⏑ — ⏑ — —
उ क्ता **व** सं त ति ल का | त भ जा ज गौ गः

[ ⏑ લઘુનું ચિહ્ન; — ગુરૂનું ચિહ્ન; | યતિનું ચિહ્ન. ]

અર્થાત—આ છંદમાં ચૌદ વર્ણો છે. તેમાં ત, ભ, જ અને જ એમ ચાર ગણો છે અને છેવટના બે વર્ણો યાને અક્ષરો ગુરૂ છે. આ છંદને **વસંતતિલક, સિંહોદ્ધતા, સિંહોન્નતા, ઈન્દુ-વદના** ઈત્યાદિ નામોથી પણ ઓળખવામાં આવે છે. આ છંદમાં આઠમા અને છઠ્ઠા અક્ષર પછી યતિ છે. અર્થાત્ પહેલા આઠ વર્ણો બોલ્યા બાદ અટકવામાં આવે છે તેમજ ત્યાર પછી છ વર્ણો પછી પણ તેમજ છે.

આ તો આપણે આ વૃત્તનો ગણની અપેક્ષાએ વિચાર કર્યો. હવે આ વૃત્તમાં કયો અક્ષર યાને વર્ણ હ્રસ્વ કે દીર્ઘ છે એ અપેક્ષાપૂર્વક વિચાર કરીએ, તો માલૂમ પડશે કે એ બાબત ઉપર નિમ્નલિખિત શ્લોક યથાયોગ્ય પ્રકાશ પાડે છે.

"आद्यं द्वितीयमपि चेद् गुरु तच्चतुर्थं
यत्राष्टमं च दशमान्त्यमुपान्त्यमन्त्यम् ।
कामाङ्कुशाङ्कुशितकामिमतङ्गजेन्द्रे !
कान्ते ! 'वसन्ततिलकां' किल तां वदन्ति ॥"

—શ્રુતબોધ ( શ્લો૦ ૩૭ ).

અર્થાત્—હે કામરૂપ અંકુશ વડે અંકુશમાં આણ્યા છે કામિજનરૂપી કુંજરોને જેણે એવી હે કાન્તા ! જે પદ્યનો પહેલો, બીજો, ચોથો, આઠમો, દશમાની પછીનો (એટલે કે અગ્યારમો), તેરમો (ઉપાન્ત્ય) અને ચૌદમો (અન્ત્ય) અક્ષર ગુરૂ હોય, તે પદ્યને (વિબુધ જનો) 'વસંતતિલકા' કહે છે.

ઉપર્યુક્ત વિવેચન ઉપરથી જોઈ શકાય છે કે આ સ્તુતિ **વસન્તતિલકા** નામના સમ-વૃત્તમાં રચાયેલી હોવાથી તે તગણથી શરૂ થાય છે. પરંતુ તે વાત ઇષ્ટ નથી, કેમકે કહ્યું છે કે—

"'मो' भूमिः श्रियमातनोति 'य' जलं वृद्धिं 'र' चाग्निर्मृतिं
'सो' वायुः परदेशदूरगमनं 'त' व्योम शून्यं फलम् ।
'जः' सूर्यो रुजमाददाति विपुलं 'भे'न्दुर्यशो निर्मलं
'नो' नाकश्च सुखप्रदः फलमिदं प्राहुर्गणानां बुधाः ॥"

—શાર્દૂલવિક્રીડિત.

અર્થાત્—મગણનો અધિષ્ઠાયક દેવતા 'પૃથ્વી' છે અને તે લક્ષ્મીનો વિસ્તાર કરે છે; યગણનો દેવતા 'જલ' છે અને તે આયુષ્યની વૃદ્ધિ કરે છે; રગણનો અધિષ્ઠાયક દેવતા 'અગ્નિ' છે અને તેનું ફળ મૃત્યુ છે; સગણનો દેવતા 'વાયુ' છે અને દૂર પરદેશગમન તે તેનું ફળ છે; તગણનો અધિષ્ઠાયક દેવતા 'ગગન' છે અને તેનું ફળ શૂન્ય છે; 'સૂર્ય' એ

જગણનો દેવતા છે અને તે રોગ-જનક છે; 'ચન્દ્ર' એ ભગણનો અધિષ્ઠાયક છે અને તે નિર્મલ તેમજ વિપુલ યશનો દાતા છે; નગણનો દેવતા 'સ્વર્ગ' છે અને તે સુખકારી છે; આ પ્રમાણેનું ગણોનું ફળ પણ્ડિતોએ કહ્યું છે[1].

આના બચાવમાં કહી શકાય તેમ છે કે તાર્કિકશિરોમણિ **શ્રીસિદ્ધસેન દિવાકરે કલ્યાણમંદિર** અને **માનતુંગસૂરિજીએ ભક્તામર** સ્તોત્ર વસંતતિલકા વૃત્તમાં રચ્યાં છે તેનું શું ? આ ઉપરાંત **શ્રીબપ્પભટ્ટિસૂરિએ** પણ **ચતુર્વિંશતિકાનો** પ્રથમ શ્લોક આ વૃત્તમાં રચ્યો છે તે પણ ભૂલવા જેવું નથી.

**તીર્થંકર-વિચાર—**

જૈન શાસ્ત્રમાં કાલના ('કાલ-ચક્ર'ના) 'ઉત્સર્પિણી' અને 'અવસર્પિણી' એમ બે મુખ્ય વિભાગો પાડવામાં આવ્યા છે. આ દરેકના છ છ અવાન્તર વિભાગો પણ કલ્પવામાં આવ્યા છે અને તે દરેકને 'આરા' (સં૦ अर) કહેવામાં આવે છે. તુલ્ય સમયવાળા ઉત્સર્પિણી અને અવસર્પિણી કાલના ત્રીજા અને ચોથા આરામાં **ભરત** ક્ષેત્ર અને **ઐરાવત** ક્ષેત્રમાં ચોવીસ ચોવીસ **તીર્થંકરોનો** સદ્ભાવ હોય છે. આ **તીર્થંકરો** કંઈ વિષ્ણુના કૂર્માદિક દશ અવતારોની માફક એકજ વ્યક્તિના અવતારો નથી; પરંતુ તેઓ તો પૃથક્ પૃથક્ વ્યક્તિ છે અને વળી ભવ પૂર્ણ થતાં તેઓ પરમાનંદ પદને પામે છે. આ ચાલુ અવસર્પિણી કાલમાં આ ભરતક્ષેત્રમાં **ઋષભ** આદિ ચોવીસ તીર્થંકરો થઈ ગયા છે. તેમનું ચરિત્ર કલિકાલસર્વજ્ઞ **શ્રીહેમચન્દ્ર** આચાર્યે 'ત્રિષષ્ટિશલાકાપુરૂષચરિત્ર' નામના કાવ્યમાં આબેહુબ રીતે આલેખ્યું છે. આ ઉપરાંત પ્રાયઃ દરેક તીર્થંકરનું અલગ ચરિત્ર પણ જોવામાં આવે છે. દાખલા તરીકે **ઋષભ** દેવના **વર્ધમાનસૂરિ, અમરચન્દ્ર** તેમજ **વિનયચન્દ્રકૃત** ચરિત્રો છે. (જુઓ **જૈન ગ્રન્થાવલિ** પૃ૦ ૨૩૮.) આ પ્રભુની સ્થૂલ રૂપરેખા તો **શ્રીશોભનમુનિકૃત** 'સ્તુતિચતુર્વિંશતિકા'ના પ્રથમ શ્લોકના સ્પષ્ટીકરણ (પૃ૦ ૯) ઉપરથી જોઈ શકાશે.

**समस्तजिनवराणां स्मरणम्—**

तं तीर्थराजनिकरं स्मर मर्त्य ! मुक्तं
पद्मेक्षणं सुमनसां प्रमदा दरेण ।
वृष्टिं व्यधुर्विविधवर्णजुषां यदंह्रि-
पद्मेऽक्षणं सुमनसां प्रमदादरेण ॥ २ ॥

—वसन्त०

---

१ સરખાવો—

"उर्वी 'म'स्त्रिगुरुः श्रियं वितनुते 'न' स्वस्त्रिलो जीवितं
'रो'ऽग्निर्मध्यलघुर्मृतिं 'स' पवनो देशभ्रमं चान्त्यगुः ।
'यो' वार्यादिलघुर्धृतिं दिनमणिर्मध्ये गुरु 'जो' रुजं
द्यौ 'स्तो' मूर्तिघनक्षयं [illegible] 'म'[illegible] यशः ॥"

## विवरणम्

हे मर्त्य ! तं तीर्थराजनिकरं स्मर–चिन्तय । निकरं किंविशिष्टं ? मुक्तं–रहितम् । केन ? दरेण–भयेन । पुनः पद्मवदीक्षणे–लोचने यस्य तम् । तं कं ? यदंह्रिपद्मे सुमनसां प्रमदाः–सुरस्त्रियः सुमनसां–पुष्पाणां वृष्टिं–वर्षणं व्यधुः–चक्रुः । कथं ? अक्षणं–चिरम् । केन ? प्रमदादरेण–हर्षादरेण । पुष्पाणां किंविशिष्टानां ? विविधवर्णजुषां–पञ्चवर्णयुतानाम् ॥ २ ॥

## अन्वयः

( हे ) मर्त्य ! यद्–अंह्रि–पद्मे सुमनसां प्रमदाः विविध–वर्ण–जुषां सुमनसां वृष्टिं प्रमद–आदरेण अ–क्षणं व्यधुः, तं दरेण मुक्तं, पद्म–ईक्षणं, तीर्थ–राजन्–निकरं स्मर ।

## શબ્દાર્થ

तीर्थ=(૧) ચતુર્વિધ સંઘ; (૨) દ્વાદશાંગી; (૩) પ્રથમ ગણધર.
राजन्=રાજા, સ્વામી.
निकर=સમૂહ, સમુદાય.
तीर्थराजनिकरं=તીર્થંકરોના સમુદાયને.
स्मर ( ધા૦ स्मृ )=તું યાદ કર.
मर्त्य !(મૂ૦ मर्त्य)=હે માનવ, હે મરણશીલ જીવ !
मुक्तं ( મૂ૦ मुक्त )=મુક્ત.
पद्म= પદ્મ, કમલ.
ईक्षण=નેત્ર.
पद्मेक्षणं=કમલનાં જેવાં નેત્ર છે જેનાં એવાને.
सुमनसां ( મૂ૦ सुमनस् )=દેવોની.
प्रमदाः ( મૂ૦ प्रमदा )=કાન્તાઓ, વલ્લભાઓ.
दरेण ( મૂ૦ दर )=ભયથી.
वृष्टिं ( મૂ૦ वृष्टि)=વરસાદ.
व्यधुः ( ધા૦ धा )=કરતી હવી.
विविध=વિધ વિધ, અનેક પ્રકારના.
वर्ण=રંગ.
जुष्=સેવવું.
विविधवर्णजुषां=વિવિધ વર્ણોને સેવનારાં.
यद्=જે.
अंह्रि=ચરણ.
यदंह्रिपद्मे=જેનાં ચરણ–કમલમાં.
क्षण=ક્ષણ.
अक्षणं=ક્ષણ વારજ નહિ, લાંબા કાલ પર્યંત.
सुमनसां ( મૂ૦ सुमनस् )=પુષ્પોની.
प्रमद=હર્ષ, આનન્દ.
आदर=માન, વિનય.
प्रमदादरेण=હર્ષ અને આદર સહિત.

## શ્લોકાર્થ

**સકલ જિનેશ્વરોનું સ્મરણ—**

" હે માનવ ! જેનાં ચરણ–કમલમાં દેવોની વલ્લભાઓ ( અર્થાત્ દિવ્યાંગનાઓ ) વિવિધ વર્ણનાં ( અર્થાત્ પંચરંગી[1] ) પુષ્પોની ચિરકાલપર્યંત હર્ષ અને આદરપૂર્વક વૃષ્ટિ કરતી

---

[1] જૈન શાસ્ત્રમાં વર્ણના ( રંગના ) પાંચ પ્રકારો બતાવ્યા છે–( ૧ ) શુક્લ, ( ૨ ) કૃષ્ણ, ( ૩ ) રક્ત, ( ૪ ) પીત અને ( ૫ ) નીલ.

હવી, તે ભયથી મુક્ત ( અર્થાત્ નિર્ભય ) તેમજ કમલનાં સમાન નેત્રવાળા એવા તીર્થંકરોના સમુદાયનું તું સ્મરણ કર."—૨

आगम-स्वरूपम्—

चित्ते जिनप्रवचनं चतुराः ! कुरुध्वं
सद्धेतुलाञ्छितमदो दितसाङ्गजालम् ।
यत् प्राणिनामकथयद् वरवित्तिलक्ष्मीं
सद्धेऽतुलां छितमदोदितसाङ्गजालम् ॥ ३ ॥

—वसन्त०

## विवरणम्

हे चतुराः ! यूयं अदो जिनप्रवचनं–जिनमतं चित्ते कुरुध्वं–स्मरत । प्रवचनं किंविशिष्टं ? सद्धेतुभिः–प्रधानहेतुभिः लाञ्छितं–युक्तम् । पुनः किं० ? दितं–छितं, साङ्गजं–सकन्दर्पं, आलं–अनर्थो येन तत् । तत् किं० ? यन्मतं प्राणिनां वरवित्तिलक्ष्मीं–सज्ज्ञानरमां अकथयत्–वदति स्म । यत् किं० ? सत्–अर्थतः सर्वदा विद्यमानम् । लक्ष्मीं किंविशिष्टां ? अतुलां–असाधारणाम् । यत् किं० ? छितमदानां–मुनीनां, उदिता–उदयमागता, सा–ल[illegible]नीयत्वात् एतादृशं अङ्गानां–आचाराङ्गादीनां जालं–व्रजं यत्र तत् ॥ ३ ॥

### अन्वयः

हे चतुराः ! यद् सत्, छित–मद–उदित–सा–अङ्ग–जालं ( प्रवचनं ) प्राणिनां अ–तुलां वर–वित्ति–लक्ष्मीं अकथयत्, अदः सत्–हेतु–लाञ्छितं, दित–स–अङ्गज–आलं, जिन–प्रवचनं चित्ते कुरुध्वम् ।

### શબ્દાર્થ

चित्ते ( मू० चित्त )=મનમાં.
जिन=જીત્યા છે રાગ-દ્વેષ જેણે તે, વીતરાગ.
प्रवचन=સિદ્ધાન્ત, મત.
जिनप्रवचनं=જિનના સિદ્ધાન્તને, જૈન મતને.
चतुराः ! ( मू० चतुर )=હે કુશલ જનો !
कुरुध्वं ( मू० कृ )=કરો.
सत्=ઉત્તમ, પ્રશંસનીય.
हेतु=યુક્તિ.
लाञ्छित=યુક્ત.
सद्धेतुलाञ्छितं=પ્રશંસનીય યુક્તિઓથી યુક્ત.
अदः ( मू० अदस् )=આ.
दित ( धा० दो )=કાપી નાંખેલ.
अङ्गज=કંદર્પ, કામદેવ, રતિ-પતિ.
आल=અનર્થ.
दितसाङ्गजालं=નાશ કર્યો છે કામદેવનો તેમજ અનર્થનો જેણે એવા.

यद् ( मू० यद् )=જે.
प्राणिनां ( मू० प्राणिन् )=જીવોને.
अकथयत् ( धा० कथ् )=કહેતો હવો.
वर=પ્રધાન.
वित्ति=જ્ઞાન.
लक्ष्मी=લક્ષ્મી.
वरवित्तिलक्ष्मीं=પ્રધાન જ્ઞાનરૂપ લક્ષ્મીને.
सत्=વિદ્યમાન, હેયાત.
हे=હે.
अतुलां ( मू० अतुला )=અસાધારણ.
छित ( धा० छो )=કાપી નાંખેલ.
मद=અભિમાન, ગર્વ.
उदित ( धा० इ )=ઉદયમાં આવેલ.
सा=લક્ષ્મી[1].
अङ्ग=અંગ, જૈન શાસ્ત્રના પાડવામાં આવેલા બાર વિભાગો પૈકી એક વિભાગ.
जाल=સમૂહ.
छितमदोदितसाङ्गजालं=તોડી નાંખ્યો છે ગર્વને જેમણે એવાને પ્રાપ્ત થઈ છે લક્ષ્મી જેમાંથી એવાં અંગોનો સમૂહ છે જેને વિષે એવા.

## શ્લોકાર્થ

**શ્રીસિદ્ધાન્તનું સ્વરૂપ—**

"( અર્થતઃ સર્વદા ) વિદ્યમાન [ અથવા શોભનીય ] એવા, તેમજ તોડી નાંખ્યો છે અભિમાનને જેઓએ એવાને ( અર્થાત્ નિરભિમાનીને ) પ્રાપ્ત થઈ છે ( સર્વજ્ઞતારૂપી ) લક્ષ્મી જેમાંથી એવાં અંગોના[2] સમૂહરૂપ જે ( મત ) જીવોને અસાધારણ તેમજ ઉત્તમ જ્ઞાનરૂપ એવી લક્ષ્મીને કહેતો હવો, તે પ્રધાન યુક્તિઓથી યુક્ત એવા, તથા વળી નાશ કર્યો છે રતિ–પતિનો તેમજ અનર્થનો જેણે એવા જૈન મતને, હે ચતુર ( જનો ) ! તમે ચિત્તમાં ( ધારણ ) કરો."—૩

**श्रीचक्रेश्वर्याः प्रार्थना—**

सा मे चिनोतु सुचिरं चलचञ्चुनेत्रा
'चक्रेश्वरी' मतिमतान्तिमिरम्मदाभा ।
या हन्ति हेलिरुचिवद् विलसन्नितम्ब–
चक्रेश्वरी मतिमतां तिमिरं मदाभा ॥ ४ ॥ १ ॥

—वसन्त०

---

१ સરખાવો—

"लक्ष्मीः पद्मा रमा या मा, ता सा श्रीः कमलेन्दिरा ।
हरिप्रिया पद्मवासा, क्षीरोदतनयाऽपि च ॥

—અભિધાન–ચિન્તામણિ ( કા૦ ૨, શ્લો૦ ૧૪૭).

૨ આ ' અંગ ' સંબંધી માહિતીને માટે જુઓ સ્તુતિ–ચતુર્વિંશતિકાના તૃતીય શ્લોકના ઉપરનું મારું સ્પષ્ટીકરણ ( પૃ૦ ૨૨ ).

चक्रेश्वरी (अप्रतिचक्रा) देवी



निर्वाणकलिकायाम्—

"तस्मिन्नेव तीर्थे समुत्पन्नामप्रतिचक्राभिधानां यक्षिणीं हेमवर्णां गरुड-
वाहनामष्टभुजां वरदबाणचक्रपाशयुक्तदक्षिणकरां धनुर्वज्रचक्राङ्कुशवाम-
हस्तां चेति ।"

नि. सा. प्रेस.

## विवरणम्

सा 'चक्रेश्वरी' देवी मे–मम मतिं–बुद्धिं चिनोतु–करोतु । मतिं कीदृशीं ? अतान्तिं–अक्षीणाम् । कथं ? सुचिरं–सदा । सा किंविशिष्टा ? चलचञ्चुवत्–चकोरवत् नेत्रे–नयने यस्याः सा । पुनः किं० ? इरम्मदाभा–मेघाग्निवत् आभा–प्रभा यस्याः । सा का ? या देवी मतिमतां–विदुषां तिमिरं-तमो हन्ति । किंवत् ? हेलिरुचिवत् । यथा रविरश्मिस्तमो हन्ति । या किंविशिष्टा ? विलसत्–दीप्यत् नितम्बचक्रं–कटितटं यस्याः सा । पुनः किं० ? ईश्वरी-स्वामिनी । पुनः किं० ? मदेन–हर्षेण स्मयेन वा आभा–शोभा यस्याः सा ॥ ४ ॥

### अन्वयः

या विलसत्–नितम्ब–चक्रा, ईश्वरी, मद–आभा (देवी) मति–मतां तिमिरं हेलि–रुचि–वत् हन्ति, सा चल–चञ्चु–नेत्रा, इरम्मद्–आभा 'चक्रेश्वरी' मे अ–तान्तिं मतिं सुचिरं चिनोतु ।

### શબ્દાર્થ

सा ( मू० तद् )=તે.
मे ( मू० अस्मद् )=મારી.
चिनोतु ( धा० चि )=કરો.
सुचिरं=દીર્ઘ કાલ પર્યંત.
चल=ચંચળ, અસ્થિર.
चञ्चु=ચાંચ.
चलचञ्चु=ચંચળ છે ચાંચ જેની તે, ચકોર પક્ષી.
नेत्र=લોચન, આંખ.
चलचञ्चुनेत्रा=ચકોર પક્ષીનાં જેવાં નેત્રો છે જેનાં એવી.
चक्रेश्वरी=ચક્રેશ્વરી ( દેવી ).
मतिं ( मू० मति )=બુદ્ધિ.
तान्ति=ક્ષીણતા.
अतान्तिं ( मू० अतान्ति )=અક્ષીણ.
इरम्मद=(૧) સૌદામિની, વીજળી;(૨)વડવાનલ.
आभा=પ્રભા.
इरम्मदाभा=સૌદામિની અથવા વડવાનલના જેવી છે પ્રભા જેની એવી.
या ( मू० यद् ) જે.
हन्ति ( धा० हन् )=હણે છે, નાશ કરે છે.
हेलि=સૂર્ય.
रुचि=કિરણ.
वत्=માફક.
हेलिरुचिवत्=સૂર્યનાં કિરણોની માફક.
विलसत् ( धा० लस् )=દેદીપ્યમાન, સુશોભિત.
नितम्ब=સ્ત્રીની કેડ.
चक्र=ચક્ર, વલય.
विलसन्नितम्बचक्रा=દેદીપ્યમાન છે કટિ–વલય જેનું એવી.
ईश्वरी=સ્વામિની.
मतिमतां ( मू० मतिमत् )=બુદ્ધિશાળીઓના.
तिमिरं ( मू० तिमिर )=( ૧ ) અજ્ઞાનને; ( ૨ ) અંધકારને.
मद=( ૧ ) હર્ષ; ( ૨ ) આશ્ચર્ય.
आभा=શોભા.
मदाभा=હર્ષ અથવા આશ્ચર્ય વડે શોભા છે જેની એવી.

## શ્લોકાર્થ

**શ્રીચક્રેશ્વરીને પ્રાર્થના—**

" દેદીપ્યમાન કટિ-વલય છે જેનું એવી તેમજ ( માનવ, દાનવ વિગેરેની ) સ્વામિની તથા હર્ષ [ અથવા આશ્ચર્ય ] વડે શોભતી એવી જે ( દેવી ) બુદ્ધિશાળીઓના ( મોહરૂપી ) અંધકારનો સૂર્યનાં કિરણોની જેમ નાશ કરે છે, તે ચકોર ( પક્ષી )નાં જેવાં લોચનવાળી તેમજ સૌદામિની [અથવા વડવાનલ]ના જેવી પ્રભાવાળી **ચક્રેશ્વરી** ( દેવી ) મારી મતિને દીર્ઘ કાલ પર્યંત ( અર્થાત્ સદાને માટે ) અક્ષીણ કરો. "—૪

## સ્પષ્ટીકરણ

**ચક્રેશ્વરી દેવીનું સ્વરૂપ—**

જેમ દરેક તીર્થંકરની એક શાસન-દેવી હોય છે, તેમ પ્રથમ તીર્થંકર **શ્રીઋષભદેવ**ને પણ હતી. આ દેવી **ચક્રેશ્વરી**ના નામથી ઓળખાય છે. આનું બીજું નામ **અપ્રતિચક્રા** પણ છે. આ દેવીનો વર્ણ સુવર્ણસમાન છે. વળી તેને ગરૂડનું વાહન છે અને તેને આઠ હાથ છે. તેના જમણા ચાર હાથમાં વરદ[1], બાણ, ચક્ર અને પાશ છે, જ્યારે ડાબા ચાર હાથમાં તો ધનુષ્ય, વજ્ર, ચક્ર અને અંકુશ છે. આ તો **પ્રવચનસારોદ્ધાર** ( પત્રાંક ૯૩-૯૪ ) પ્રમાણે હકીકત વિચારી. હવે આ સંબંધમાં **આચાર-દિનકર** ( પત્રાંક ૧૭૯ )શું કહે છે તે પણ જોઈ લઈએ. ત્યાં કહ્યું છે કે—

" स्वर्णाभा गरुडासनाष्टभुजयुग् वामे च हस्तोच्चये
वज्रं चापमथाङ्कुशं गुरुधनुः सौम्याशया बिभ्रती ।
तस्मिंश्चापि हि दक्षिणेऽथ वरदं चक्रं च पाशं शरान्
सच्चक्राऽपरचक्रभञ्जनरता 'चक्रेश्वरी' पातु नः ॥ "

—શાર્દૂલ-વિક્રીડિત.



૧ વરદાન દેતી વખતે જેવો હાથ રાખવો પડે તે ' વરદ ' કહેવાય છે.

## २ श्रीअजितजिनस्तुतयः

**अथ श्रीअजितनाथस्य स्मरणम्—**

सद्युक्तिमुक्तितरुणीनिरतं निरस्त-
रामानवस्मरपरं जितशत्रुजातम् ।
अन्तर्जवेन 'विजया'ङ्गजमात्तधर्म्म-
रा मानव ! स्मर परं 'जितशत्रु'जातम् ॥ ५ ॥

—वसन्त०

### विवरणम्

हे मानव ! त्वं 'विजया'ङ्गजं–'अजित'जिनं स्मर–स्मृतिपथं नय । केन ? अन्तर्जवेन–मनोवेगेन । विजयाङ्गजं किंविशिष्टं ? सद्युक्तिमुक्तितरुण्यां–प्रधानसिद्धिस्त्रियां निरतं–रागिणम् । पुनः किं० ? निरस्ता–मुक्ता रामाः–स्त्रियो नवस्मरः–नव्यकामः परे–वैरिणो येन तम् । पुनः किं० ? परं–प्रशस्यम् । पुनः किं० ? जितं कर्मरूपशत्रुजातं येन तम् । त्वं किं० ? आत्तः–प्राप्तो धर्म्मरा:–सुकृतस्वं येन सः । जिनं किं० ? 'जितशत्रु'नृपात् जातं–समुद्भवम् ॥ ५ ॥

### अन्वयः

( हे ) मानव ! आत्त–धर्म–राः ( त्वं ) सत्–युक्ति–मुक्ति–तरुणी–निरतं निरस्त–रामा–नव–स्मर–परं, जित–शत्रु–जातं, परं, 'जितशत्रु'–जातं, 'विजया'–अङ्गजं अन्तर्–जवेन स्मर ।

### શબ્દાર્થ

युक्ति=હેતુ.
मुक्ति=સિદ્ધિ, મોક્ષ.
तरुणी=યુવતિ, રમણી.
निरत ( धा० रम् )=અત્યંત આસક્ત.
सद्युक्तिमुक्तितरुणीनिरतं=સુંદર યુક્તિઓથી યુક્ત એવી મુક્તિરૂપી યુવતિને વિષે અત્યંત આસક્ત થયેલાને.
निरस्त ( धा० अस् )=દૂર કરેલ, ત્યજી દીધેલ.
रामा=લલના, નારી.
नव=નવીન.
स्मर=કામદેવ, રતિ–રમણ, મદન.
पर=શત્રુ, વૈરી.
निरस्तरामानवस्मरपरं=દૂર ફેંકી દીધાં છે નારીઓને, નવીન કામદેવને તેમજ શત્રુઓને જેણે એવાને.
जित ( धा० जि )=જીતેલ.
शत्रु=દુશ્મન.
जात=સમૂહ.
जितशत्रुजातं=જીત્યો છે શત્રુ–સમૂહને જેણે એવા તેને.

**अन्तर्**=આન્તરિક.
**जव**=વેગ.
**अन्तर्जवेन**=મનોવેગપૂર્વક.
**विजया**=વિજયા ( રાણી ).
**अङ्गज**=પુત્ર, નન્દન.
**विजयाङ्गजं**=વિજયા ( રાણી )ના પુત્રને.
**आत्त** ( ધા૦ दा )=ગ્રહણ કરેલ.
**धर्म**=ધર્મ.
**रै**=લક્ષ્મી, ધન.
**आत्तधर्मराः**=ગ્રહણ કરી છે ધર્મરૂપી લક્ષ્મી જેણે એવા.
**मानव** ! ( મૂ૦ मानव )=હે મનુષ્ય !
**परं** ( મૂ૦ पर )=ઉત્કૃષ્ટ.
**जितशत्रु**=જિતશત્રુ ( રાજા ).
**जात**=નન્દન.
**जितशत्रुजातं**=જિતશત્રુ ( રાજા )ના નન્દનને.

## શ્લોકાર્થ

**શ્રીઅજિતનાથનું સ્મરણ—**

"સુંદર યુક્તિઓથી યુક્ત એવી ( અર્થાત્ સાદિ અનંત કાલ જ્યાં રહેવાનું છે એવા સદ્યોગવાળી ) મુક્તિરૂપી મહિલાને વિષે અત્યંત આસક્ત થયેલા, તથા વળી દૂર ફેંકી દીધાં છે નારીઓને, નવીન કંદર્પને તેમજ શત્રુઓને જેણે એવા [ અર્થાત્ માનિની, મદન કે દુશ્મન સાથે જેને કંઈ પણ લેવા દેવા નથી એવા ], તેમજ વળી વિજય મેળવ્યો છે ( બાહ્ય તેમજ અભ્યંતર ] શત્રુ-સમૂહ ઉપર જેણે એવા, તથા ઉત્કૃષ્ટ એવા, તેમજ **જિતશત્રુ** [ રાજા ]થી ઉત્પન્ન થયેલા [ અર્થાત્ તેમના નન્દન ] તથા **વિજયા** [ રાણી ]ના પુત્ર એવા **અજિતનાથને**, હે મનુષ્ય! જેણે ધર્મરૂપી ધન ગ્રહણ કર્યું છે એવો તું મનોવેગપૂર્વક યાદ કર."—૫

## સ્પષ્ટીકરણ

જેમ પ્રથમ શ્લોકમાં 'નાભેય' શબ્દ દ્વારા પ્રથમ જિનેશ્વર ઋષભદેવના પિતાશ્રી 'નાભિના'નામનું સૂચન કરવામાં આવ્યું છે, તેમ આ શ્લોકમાં દ્વિતીય જિનેશ્વર શ્રીઅજિતનાથના માતા અને પિતા એમ બન્નેનાં નામોનો સાક્ષાત્ ઉલ્લેખ કરવામાં આવ્યો છે. વળી જોકે આ તીર્થંકરને કામિની સાથે કંઈ કામ નથી, છતાં પણ તે મુક્તિ-રમણીના રાગી છે એમ વર્ણવી કવિરાજે કટાક્ષ કર્યો છે.

બૃહત્-ટિપ્પનિકાના આધારે સમજી શકાય છે કે **અજિતનાથ-ચરિત્ર** પણ સંસ્કૃત તેમજ પ્રાકૃત ભાષામાં પૃથક્ લખાયેલ છે પણ તે લભ્ય નથી. આ દ્વિતીય તીર્થંકરની સ્થૂલ રૂપ-રેખા શ્રીશોભનમુનિકૃત સ્તુતિ-ચતુર્વિંશતિકાના વિવેચન ( પૃ૦ ૩૪ ) ઉપરથી મળી શકશે.

विश्वविश्वेश्वराणां विज्ञप्तिः—

विश्वेश्वरा विशसनीकृतविश्वविश्वा-
वामप्रतापकमलास्ततमोविपक्षाः ।
निघ्नन्तु विघ्नमघवन्तमनन्तमाप्ता
वामप्रतापकमलास्ततमोविपक्षाः ॥ ६ ॥

—वसन्त०

## विवरणम्

आप्ता-जिना विघ्नं निघ्नन्तु-निरस्यन्तु । आप्ताः किंविशिष्टाः ? विश्वेश्वरा-जगदीश्वराः । पुनः किं० ? विशसनीकृता-हता विश्वे-समस्ता विश्वाया-जगत्याः वामः-प्रतिकूलः प्रतापः-प्रकृष्टः क्लेशो येभ्यः ईदृशा मलास्ततमोविपक्षाः-पापमरणाज्ञानवैरिणो यैस्ते । विघ्नं किं० ? अघवन्तं-पापयुतम् । पुनः किं० ? अनन्तं-अपारम् । आप्ताः किंविशिष्टाः ? वामः-कान्तः प्रतापस्तस्य कमला-श्रीस्तया अस्तो-जितः तमोविपक्षः-सूर्यो यैस्ते ॥ ६ ॥

## अन्वयः

विश्व-ईश्वराः, विशसनी-कृत-विश्व-विश्वा-वाम-प्र-ताप-क-मल-अस्त-तमस्-विपक्षाः, वाम-प्रताप-कमला-अस्त-तमस्-विपक्षाः आप्ताः अघ-वन्तं विघ्नं निघ्नन्तु ।

## શબ્દાર્થ

ईश्वर=સ્વામી, પ્રભુ.
विश्वेश्वराः=જગતના સ્વામીઓ.
विशसन=મારી નાંખવું તે.
विशसनीकृत=હણી નાંખેલ.
विश्व=સમસ્ત.
विश्वा=જગત્, દુનિયા.
वाम=પ્રતિકૂલ.
प्र=પ્રકર્ષવાચક ઉપસર્ગ.
ताप=સંતાપ.
प्रताप=અત્યંત સંતાપ.
मल=પાપ.
अस्त=મરણ.
तमस्=કાર્યાકાર્યનો અવિવેક, અજ્ઞાન.
विपक्ष=શત્રુ, દુશ્મન.
विशसनीकृतविश्वविश्वावामप्रतापकमलास्ततमोविपक्षाः=નાશ કર્યો છે સમસ્ત બ્રહ્માણ્ડને પ્રતિકૂલ તેમજ અત્યંત કલેશ છે જેનાથી એવા પાપ, મરણ અને અજ્ઞાનરૂપી દુશ્મનોનો જેમણે એવા.
निघ्नन्तु ( धा० हन् )=હણી નાંખો.
विघ्नं ( मू० विघ्न )=વિઘ્નને, સંકટને.
अघ=પાપ.
अघवन्तं ( मू० अघवत् )=પાપયુક્ત.
अनन्तं ( मू० अनन्त )=અન્ત નથી જેનો એવા, અપાર.
आप्ताः ( मू० आप्त )=આપ્ત, વિશ્વાસ-પાત્ર.
वाम=મનોહર.
प्रताप=પ્રતાપ, તેજ.

**कमला**=લક્ષ્મી.
**अस्त** ( ધા૦ अस् )=ફેંકી દીધેલ, પરાસ્ત કરેલ.
**तमस्**=અંધકાર.
**तमोविपक्ष**=સૂર્ય.
**धामप्रतापकमलास्ततमोविपक्षाः**=મનોહર પ્રતાપરૂપી લક્ષ્મી વડે પરાસ્ત કર્યો છે સૂર્યને જેમણે એવા.

## શ્લોકાર્થ

**સમસ્ત જિનેશ્વરોને વિનતિ—**

"વિશ્વના સ્વામી, તેમજ વળી નાશ કર્યો છે સમસ્ત બ્રહ્માણ્ડને પ્રતિકૂલ તેમજ અત્યંત ક્લેશકારી એવા પાપ, મરણ અને અજ્ઞાનરૂપી દુશ્મનનોનો જેમણે એવા, તથા વળી મનોહર પ્રતાપરૂપી લક્ષ્મી વડે પરાસ્ત કર્યો છે સૂર્યને ( પણ ) જેમણે એવા આપ્ત ( તીર્થંકરો ) પાપથી યુક્ત તેમજ અપાર એવા વિઘ્નનો સર્વથા અંત આણો."—૬

## સ્પષ્ટીકરણ

**આપ્ત-વિચાર—**

દરેક સ્તુતિ-કદમ્બકમાં દ્વિતીય શ્લોકમાં તો સમસ્ત જિનવરો-તીર્થંકરોની સ્તુતિ કરવામાં આવે છે, ત્યારે અત્ર તો કવિરાજે તેમ ન કરતાં 'આપ્ત'ની સ્તુતિ કરી છે તેનું શું કારણ ? અરે, આ પ્રશ્ન દમ વિનાનો છે, કારણકે શું તીર્થંકરો 'આપ્ત' નથી કે ? ધ્યાનમાં રાખવું કે આપ્તના મુખ્યત્વેન લૌકિક અને લોકોત્તર એમ બે વિભાગો પડે છે. તેમાં લૌકિક આપ્તથી જનક, વિદ્યા-ગુરૂ સમજવામાં આવે છે; કારણકે પોતાના પુત્ર-શિષ્ય ઉપરના પ્રેમને લીધે તેઓ તેમને યથોચિત સલાહ આપે છે અને તદંશે તેઓ વિશ્વાસ-પાત્ર છે. આથી વધારે વિશ્વાસ-પાત્ર તો તેજ ગણાય કે જેનામાં રાગ-દ્વેષનો લેશતઃ પણ સદ્ભાવ ન હોય અને અતએવ જે સર્વજ્ઞ હોઈ કરીને પોતાની જ્ઞાન-દૃષ્ટિમાં જેવું દેખાય, તેવુંજ કહે. આવા આપ્તો તે બીજા કોઈજ નહિ, પરંતુ તીર્થંકરોજ છે. આ સંબંધમાં વિદ્વચ્ચક્રચૂડામણિ **સમન્તભદ્રજી** પણ શું કહે છે ? એજ કે—

"**देवागमनभोयान-चामरादिविभूतयः ।**
**मायाविष्वपि दृश्यन्ते, नातस्त्वमसि नो महान् ॥**"

**—દેવાગમસ્તોત્ર** ( આપ્ત-મીમાંસા[1], પ્રથમ શ્લોક ).

અર્થાત્ ( સમવસરણને વિષે ) દેવતાઓનું આગમન, આકાશ-ગમન, ચામર, ( છત્ર ) વિગેરે વિભૂતિઓ માયાવી ( ઈન્દ્રજાળ પાથરનારા )ઓને વિષે પણ દૃષ્ટિ-ગોચર થાય છે. વાસ્તે આ કારણોને લઇને કંઈ, હે જિનેશ્વર ! તું મહાન્ નથી, તું આપ્ત નથી.

આથી જોઈ શકાય છે કે ફક્ત દેવકૃત વિભૂતિ કે ચમત્કાર એ આપ્તનું લક્ષણ નથી. પરંતુ સર્વથા રાગ-દ્વેષનો ક્ષય એજ આપ્તતા છે. વિશેષમાં આ **આપ્તમીમાંસા** ઉપર **વસુનંદિએ** રચેલી ટીકા, અકલંકદેવકૃત ભાષ્ય અને **વિદ્યાનંદે** રચેલી અષ્ટસહસ્રી-વૃત્તિ પણ 'આપ્ત'ના લક્ષણ ઉપર ઓરજ પ્રકાશ પાડે છે. આ ઉપરાંત 'આપ્ત' કોને કહેવા તે સંબંધમાં ૨૦૦ શ્લોક

---

૧ આનું બીજું નામ 'દેવાગમ-સ્તોત્ર' પણ છે.

પ્રમાણાત્મક શ્રીવિદ્યાનન્દકૃત આપ્તપરીક્ષાનામક ગ્રન્થ પણ તેની ૪૫૦૦ શ્લોક પ્રમાણની વૃત્તિપૂર્વક વિચારવા જેવો છે. આપ્તનું લક્ષણ યથાર્થ રીતે સમજાતાં અને ત્યાર બાદ અમુક વ્યક્તિ આપ્ત છે કે કેમ તેનો વાસ્તવિક નિર્ણય થતાં કયા આગમનો (સિદ્ધાન્તનો) સ્વીકાર કરવો એ પ્રશ્નને સારૂ અવકાશજ રહેશે નહિ અને આ પ્રમાણે સત્ય આગમ હાથ આવતાં મુક્તિ-મહિલાના મહેલ ઉપર જઈ પહોંચવામાં પણ ઘણો વિલંબ નહિજ થાય એ દેખીતી વાત છે.

**प्रवचन-परिचयः—**

पीयूषपानमिव तोषमशेषपुंसां
निर्मायमुच्चरणकृद् भवतो ददानम् ।
ज्ञानं जिन! प्रवचनं रचयत्वनल्पं
निर्मायमुच्चरणकृद् भवतोददानम् ॥ ७ ॥

—वसन्त०

## विवरणम्

हे जिन! भवतः प्रवचनं ज्ञानं रचयतु-करोतु । ज्ञानं किंविशिष्टं? अनल्पं-प्रचुरम् । प्रवचनं किं कुर्वाणं? ददानं-ददत् । कं? तोषं-संतोषम् । केषां? अशेषपुंसाम् । इव-यथा पीयूषपानं तोषं ददाति । पुनः किं० ? निर्मायं-कपटमुक्तम् । पुनः किं० ? उच्चरणकृत्-प्रौढयुद्धभिद् । पुनः किं० ? निर्मायानां-मुनीनां मुच्चरणकृत्-हर्षचारित्रकारि । पुनः किं० ? भवस्य तोदो बाधा तस्य दानं यस्य तत् ॥ ७ ॥

## अन्वयः

(हे) जिन! भवतः अशेष-पुंसां पीयूष-पानं इव तोषं ददानं, निर्माय-मुद्-चरण-कृत्, निर्मायं, उच्च-रण-कृत [ अथवा उद्-चरण-कृत्-] भव-तोद-दानं प्रवचनं अनल्पं ज्ञानं रचयतु ।

## શબ્દાર્થ.

पीयूष=સુધા, અમૃત.
पान=પાન, પીવું તે.
पीयूषपानं=અમૃતનું પાન.
इव=જેમ.
तोषं ( मू० तोष )=સંતોષ.
अशेष=નિ:શેષ, સમસ્ત.
पुंस्=માનવ.
अशेषपुंसां=સમસ્ત માનવોના.
माया=કપટ.
निर्माय=જતું રહ્યું છે કપટ જેનું એવા, નિષ્કપટી.
मुद्=હર્ષ.
चरण=ચારિત્ર.

**कृत्**=કરનાર.
**निर्मायमुच्चरणकृत्**=નિષ્કપટી ( મુનિઓ)ના હર્ષ અને ચારિત્રને કરનાર અથવા હર્ષદાયક ચારિત્રને કરનાર.
**भवतः** ( મૂ૦ भवत् )=આપનું.
**ददानं** ( મૂ૦ ददान )=અર્પણ કરનારૂં, દેનારૂં.
**ज्ञानं** ( મૂ૦ ज्ञान )=જ્ઞાનને.
**जिन !** ( મૂ૦ जिन )=હે જિન ! હે વીતરાગ !
**प्रवचनं** ( મૂ૦ प्रवचन )=શાસન, સિદ્ધાન્ત.
**रचयतु** ( ધા૦ रच् )=કરો.
**अनल्पं** ( મૂ૦ अनल्प )=પ્રચુર, ઘણું.
**निर्मायं** ( મૂ૦ निर्माय )=કપટ-રહિત.
**उच्च**=પ્રૌ
**रण**=સંગ્રામ.
**कृत्**=ભેદવું.
**उच्चरणकृत्**=પ્રૌઢ યુદ્ધને ભેદનારૂં.
**तोद**=બાધા, પીડા.
**दान**=દાન, આપવું તે.
**भवतोददानं**=સંસારને પીડા કરનારૂં.
**उद्**=પ્રબલતાસૂચક અવ્યય.
**उच्चरणकृद्भवतोददानं**=ઉત્કૃષ્ટ ચારિત્રના વિરાધક એવા સંસારને બાધાનું દાન છે જેના દ્વારા એવું.

## શ્લોકાર્થ

**પ્રવચનનો પરિચય**—

"સમસ્ત માનવોને અમૃતના પાનની જેમ સંતોષ અર્પણ કરનારૂં, તથા માયારહિત એવા ( મુનિઓ ) ના હર્ષ અને ચારિત્રના [ અથવા હર્ષદાયક ચારિત્રના ] કારણરૂપ, વળી કપટ-રહિત તેમજ પ્રૌઢ યુદ્ધને ભેદનારૂં તથા ભવને પીડા કરનારૂં એવું [ અથવા ઉત્કૃષ્ટ ચારિત્રના વિરાધક એવા સંસારને બાધાનું દાન છે જે દ્વારા એવું ] હે વીતરાગ ! આપનું પ્રવચન પ્રચુર જ્ઞાન કરો."—૭

**श्रीअजितबलायै विज्ञप्तिः—**

श्रेयःपरागनलिनी नयतां नताङ्गी
सा मे पराऽजितबला दुरितानि तान्तम् ।
कल्याणकोटिमकरोन् निकरे नराणां
सामे पराजितबलाऽदुरिता नितान्तम् ॥ ८ ॥ २ ॥

—वसन्त०

## विवरणम्

सा 'अजितबला' नाम्नी—देवी मे—मम दुरितानि—पापानि तान्तं—क्षयं नयतु (तां)—प्रापयतु। सा किंविशिष्टा ? परा—प्रधाना । पुनः किं० ? श्रेयःपरागस्य—मङ्गलरूपपौष्पस्य नलिनी—कजिनी ।

पुनः किं० ? नवाङ्गी–नवीनतनुः । सा का ? या नराणां निकरे–वृन्दे कल्याणकोटिं अकरोत्–तनोति स्म । निकरे किंविशिष्टे ? सामे–सरोगे । या किंविशिष्टा ? परैः अजितं–अनभिभूतं बलं यस्याः सा । पुनः किं० ? अदुरिता–अनघा । नितान्तं–अत्यर्थम् ॥ ८ ॥

अन्वयः

(या) पर–अजित–बला, अ–दुरिता ( देवी ) नराणां स–आ [अ] मे निकरे कल्याण–कोटिं अकरोत्, सा श्रेयस्–पराग–नलिनी, नव–अङ्गी, परा 'अजितबला' मे दुरितानि तान्तं नितान्तं नयताम् ।

शब्दार्थ

श्रेयस्=કલ્યાણ, મંગલ.
पराग=પુષ્પની બારીક રજ.
नलिनी=પદ્મિની, પદ્મનો સમૂહ.
श्रेयःपरागनलिनी=કલ્યાણરૂપ પરાગની પદ્મિની.
नयतां ( धा० नी )=લઇ જાઓ.
अङ्ग=દેહ, શરીર.
नवाङ्गी=નવીન છે દેહ જેનો એવી.
परा ( मू० पर )=સર્વોત્કૃષ્ટ, સર્વોત્તમ.
अजितबला=અજિતબલા ( દેવી ).
दुरितानि ( मू० दुरित )=પાપોને.
तान्तं ( मू० तान्त )=ક્ષય, નાશ.
कल्याण=મંગલ.
कोटि=સો લાખ, કરોડ.
कल्याणकोटिं=કરોડો કલ્યાણને.
अकरोत् ( धा० कृ )=કરતી હવી.
निकरे ( मू० निकर )=સમુદાયને વિષે.
नराणां ( मू० नर )=મનુષ્યોના.
आम=રોગ.
अम= ,,
सामे ( मू० साम )=રોગી, વ્યાધિ–ગ્રસ્ત.
पर=અન્ય.
अजित=નહિ જીતાયેલ.
बल=પરાક્રમ.
पराजितबला=અન્ય વડે જીતાયેલું નથી પરાક્રમ જેનું એવી.
अदुरिता=અવિદ્યમાન છે પાપ જેને વિષે એવી, પાપ–રહિત.
नितान्तं=અત્યંત, સર્વથા.

શ્લોકાર્થ

**શ્રીઅજિતબલા દેવીને વિજ્ઞપ્તિ—**

" અન્ય ( વ્યક્તિઓ ) વડે નથી જીતાયેલું પરાક્રમ જેનું એવી ( અર્થાત્ અપૂર્વ બળવાળી ) તેમજ પાપ–રહિત એવી જે ( દેવી ) મનુષ્યોના વ્યાધિ–ગ્રસ્ત વર્ગને વિષે કરોડો કલ્યાણો કરતી હવી, તે મંગલરૂપ પરાગની પદ્મિનીરૂપ એવી તેમજ નવીન દેહવાળી ( અર્થાત્ તરૂણી ) તથા વળી સર્વોત્તમ એવી અજિતબલા ( દેવી ) મારાં પાપોનો સર્વથા ક્ષય કરો."—૮

## સ્પષ્ટીકરણ

**અજિતબલા દેવીનું સ્વરૂપ—**

'અજિતબલા' એ દ્વિતીય તીર્થંકર શ્રીઅજિતનાથની શાસન-દેવીનું નામ છે. 'અજિતા' એ એનું અપર નામ છે. એ ગૌરવર્ણી છે અને એને ગાયનું વાહન છે. વિશેષમાં એને ચાર હાથ છે. તેમાં તેના જમણા બે હાથમાં વરદ અને પાશ છે, જ્યારે ડાબા બે હાથમાં તો બીજપૂરક[1] અને અંકુશ છે[2]. આ દેવીના સંબંધમાં આચાર-દિનકરમાં પણ કહ્યું છે કે—

"गोगामिनी धवलरुक् च चतुर्भुजाढ्या
वामेतरं वरदपाशविभासमाना ।
वामं च पाणियुगलं सृणिमातुलिङ्ग-
युक्तं सदाऽजितबला' दधती पुनातु ॥"

—વસન્તતિલકા.



૧ બીજોરું. ૨ સરખાવો પ્રવચન-સારોદ્ધાર ( પત્રાંક ૯૪ ).

## ३ श्रीसंभवजिनस्तुतयः

**अथ श्रीसंभवनाथाय प्रार्थना—**

या दुर्लभा भवभृतामृभुवल्लरीव
मानामितद्रुमहिमाभ ! जितारिजात ! ।
श्रीसम्भवेश ! भवभिद् भवतोऽस्तु सेवा
ऽमाना मितद्रुमहिमाभ ! 'जितारि'जात ! ॥ १ ॥

—वसन्त०

### विवरणम्

हे श्रीसम्भवेश ! भवतः सा सेवा भवभित्–संसारनाशिनी अस्तु । सा का ? या सेवा भवभृतां–प्राणिनां ऋभुवल्लरीव–कल्पलतेव दुर्लभा–दुष्प्रापाऽस्ति । या किंविशिष्टा ? अमाना–मानातीता । मितद्रुः–समुद्रः तद्वन्महिम्न आभा–शोभा यस्य तत्संबोधनम् । हे जितारिजात ! 'जितारि'नृपपुत्र ! । मानः–स्मयः तद्रूपामितद्रुमे–प्रौढवृक्षे हिमाभः–तुहिनसमस्तत्सं० । जितं अरिजातं-वैरिवृन्दं येन तत्सं० ॥ १ ॥

### अन्वयः

(हे) मान–अमित–द्रुम–हिम–आभ ! जित–अरि–जात ! मितद्रु–महिमन्–आभ ! 'जितारि'–जात ! श्री–'सम्भव'–ईश ! या (भवतः सेवा) भव–भृतां ऋभु–वल्लरी इव दुर्लभा, (सा) भवतः अमाना सेवा भव–भिद् अस्तु ।

### શબ્દાર્થ

दुर्लभा ( मू० दुर्लभ )=દુર્લભ.
भृत्=ધારણ કરનાર.
भवभृतां ( मू० भवभृत् )=સંસારીઓને.
ऋभु=કલ્પવૃક્ષ.
वल्लरी=લતા, વેલ.
ऋभुवल्लरी=કલ્પ–લતા.
मान=અભિમાન, ગર્વ.
अमित=પ્રૌઢ.
द्रुम=તરુ, ઝાડ.
हिम=બરફ.
आभ=સમાન.
मानामितद्रुमहिमाभ !=હે અભિમાનરૂપ પ્રૌઢ વૃક્ષ પ્રતિ હિમસમાન !
अरि=શત્રુ.
जितारिजात !=જીત્યો છે વૈરિ–વર્ગને જેણે એવા ! ( સંબોધનાર્થે )
श्री=માનવાચક શબ્દ.
सम्भव=સંભવ ( નાથ ), ત્રીજા તીર્થંકર.

**ईश**=નાથ.
**श्रीसम्भवेश** !=હે શ્રીસંભવનાથ !
**भिद्**=ભેદવું.
**भवभिद्**=ભવને ભેદનારી.
**अस्तु** ( धा० अस् )=થાઓ.
**सेवा**=ભક્તિ, ઉપાસના.
**मान**=માપ.
**अमाना** ( मू० अमान )=માપ-રહિત, અપાર.
**मितद्रु**=સમુદ્ર.
**महिमन्**=મહિમા.
**मितद्रुमहिमाभ** !=હે સમુદ્રના મહિમાની જેમ શોભા છે જેની એવા ! ( સં० )
**जितारि**=જિતારિ ( નૃપતિ ).
**जितारिजात** !=હે જિતારિના પુત્ર !

## શ્લોકાર્થ

**શ્રીસંભવનાથને પ્રાર્થના—**

"હે અભિમાન[1]રૂપી પ્રૌઢ વૃક્ષને ( નષ્ટ કરવામાં ) હિમસમાન ( હરિ ) ! જીત્યો છે વૈરિ-વર્ગને જેણે એવા હે ( વિશ્વેશ્વર ) ! હે સમુદ્રના જેવા મહિમાવાળા ( મહેશ્વર ) ! હે જિતારિ ( નૃપતિ )ના નન્દન ! હે શ્રીસંભવનાથ ! જે ( સેવા ) સંસારી જીવોને કલ્પ-લતાની માફક દુર્લભ છે, તે આપની અપાર સેવા ( અમારા ) સંસારનો ઉચ્છેદ કરનારી થાઓ."—૯

## સ્પષ્ટીકરણ

અજિતનાથ-ચરિત્રની જેમ સંસ્કૃત તેમજ પ્રાકૃત ભાષામાં રચેલ **સંભવનાથ-ચરિત્ર** સંબંધી બૃહત્-ટિપ્પનિકામાં ઉલ્લેખ છે. આ તીર્થંકરની સ્થૂલ રૂપરેખા સારૂ જુઓ **સ્તુતિ-ચતુર્વિંશતિકા** ( પૃ० ૪૮-૪૯ ).

**निखिलजिनवराणां नुतिः—**

नाशं नयन्तु जिनपङ्कजिनीहृदीशा
निष्कोपमानकरणानि तमांसि तानि ।
ज्ञानद्युता बहुभवभ्रमणेन तस-
निष्कोपमानकरणा नितमां सितानि ॥ १० ॥

—वसन्त०

## विवरणम्

जिनपङ्कजिनीहृदीशाः—जिनसूर्याः तमांसि—अज्ञानानि नाशं नयन्तु । केन ? ज्ञानद्युता—सद्बोधतेजसा । तमांसि किंविशिष्टानि ? निर्—नितरां कोपमानयोः—क्रोधस्मययोः करणं येभ्य-

१ અભિમાનના સ્વરૂપ સારૂ જુઓ **સ્તુતિ-ચતુર્વિંશતિકા** ( પૃ० ૫૩-૫૪ ).

स्तानि । तानि कानि ? यानि तमांसि बहुभवभ्रमणेन–संसारभ्रमेण सितानि–बद्धानि सन्ति । कथं ? नितमां–अत्यर्थम् । जिनाः किंविशिष्टाः ? तप्तनिष्कस्य–स्वर्णस्य उपमानं–उपमा येषां ईदृशानि करणानि–शरीराणि येषां ते ॥ १० ॥

अन्वयः

तप्त–निष्क–उपमान–करणाः जिन–पङ्कजिनी–हृद्–ईशाः तानि बहु–भव–भ्रमणेन नितमां सितानि, निर–कोप–मान–करणानि तमांसि ज्ञान–द्युता नाशं नयन्तु ।

શબ્દાર્થ

नाशं ( મૂ० नाश )=વિનાશ પ્રતિ.
नयन्तु ( ધા० नी )=દોરો, લઈ જાઓ.
पङ्कजिनी=પદ્મિની, કમલિની.
हृद्=હૃદય, અંતઃકરણ.
पङ्कजिनीहृदीश=પદ્મિનીનો સ્વામી, સૂર્ય.
जिनपङ्कजिनीहृदीशाः=તીર્થંકરરૂપી સૂર્યો.
निर्=અત્યંતવાચક અવ્યય.
कोप=ક્રોધ, ગુસ્સો.
करण=સાધન, કારણ.
निष्कोपमानकरणानि=નિરંતર ક્રોધ અને ગર્વના કારણરૂપ.
तमांसि ( મૂ० तमस् )=અજ્ઞાનોને.
तानि ( મૂ० तद् )=તે.
ज्ञान=જ્ઞાન, બોધ.
द्युत=( ૧ ) પ્રકાશ; ( ૨ ) કિરણ.
ज्ञानद्युता=જ્ઞાનરૂપ પ્રકાશ અથવા કિરણ વડે.
बहु=ઘણા.
भ्रमण=પરિભ્રમણ, રખડપટ્ટી.
बहुभवभ्रमणेन=ઘણા ભવના પરિભ્રમણથી.
तप्त ( ધા० तप् )=તપેલા.
निष्क=સુવર્ણ, સોનું.
उपमान=ઉપમા.
करण=દેહ.
तप्तनिष्कोपमानकरणाः=તપેલા સુવર્ણની ઉપમા ( ઘટે ) છે દેહને જેમના એવા.
नितमां=અત્યંત.
सितानि ( મૂ० सित )=બાંધેલા.

શ્લોકાર્થ

**અનેક જિનેશ્વરોની સ્તુતિ—**

" તપ્ત સુવર્ણના જેવા ( વર્ણવાળા ) દેહવાળા એવા જિન–સૂર્યો ઘણા ભવોના પરિભ્રમણથી અત્યંત ગાઢ બાંધેલા એવા તેમજ નિરંતર ક્રોધ અને ગર્વના કારણભૂત એવા તે (અમારા) અજ્ઞાન ( રૂપી અંધકારો ) નો જ્ઞાનરૂપ પ્રકાશ [ અથવા કિરણ ] વડે વિનાશ કરો."—૧૦

સ્પષ્ટીકરણ

**અજ્ઞાન અને તેથી થતી અવનતિ—**

આ શ્લોકમાં અજ્ઞાનને સંસાર–પરિભ્રમણના હેતુ તરીકે તેમજ તેને ક્રોધ અને માનના કારણ તરીકે ઓળખાવવામાં આવ્યું છે, તે ન્યાય–સંગત છે. કેમકે અજ્ઞાન એજ દુઃખ–દરિયામાં ડૂબાડનારો પત્થર છે, અવનતિના ખાડામાં ઉતારનારૂં હથિયાર છે અને અનેક પ્રકારના હાસ્ય–જનક, તિરસ્કાર–પાત્ર ભાગ ભજવાવનારો સૂત્રધાર છે; અરે ટુંકમાં કહીએ તો સર્વ આપત્તિઓનું તે મૂળ છે.

એ તો દેખીતી વાત છે કે કદાચ કોઈ મનુષ્ય ક્રોધના વિપાકથી-તેના કટુ ફળથી અજ્ઞાત હોય તેથી તે ક્રોધ કરે. કદાચ એમ પણ બને કે અન્ય વ્યક્તિને પોતાના દુશ્મન તરીકે સમજવાની ભૂલ થવાથી તે ક્રોધ કરે. અરે જ્યારે અન્ય વ્યક્તિ દુશ્મન હોવાથી તેના તરફ ક્રોધ કરવો ન્યાય્ય ગણાય, તો તે જીવે એમ કેમ ન વિચારવું કે મારા કટ્ટા દુશ્મન જેવા કે અજ્ઞાનાદિક આભ્યન્તર શત્રુઓના ઉપર ક્રોધ કરવો શું ઉચિત નથી કે ? કહ્યું પણ છે કે—

" प्रकुप्याम्यपकारिभ्य, इति चेदाशयस्तव ।
तत् किं न कुप्यसि स्वस्य, कर्मणे दुःखहेतवे ? ॥"

અર્થાત્ 'હુ તો ગુન્હેગાર ઉપર ગુસ્સે થાઉં છું' એમ જો ( હે જીવ ! ) તારો આશય હોય, તો તો તારા દુઃખનાં કારણભૂત એવાં તારાં કર્મ કે જે ખરેખરા ગુન્હેગાર છે તેનાં ઉપર તું કેમ કોપાયમાન થતો નથી ?

એ પણ વિચારવા જેવી હકીકત છે કે મનુષ્યે શ્વાન (કૂતરા) ન બનતાં સિંહ જેવું આચરણ કરવું યોગ્ય છે, કેમકે કૂતરાનો સ્વભાવ તો તેના તરફ પત્થર ફેંકનારને કરડવાનો હોતો નથી, પરંતુ તે તો પત્થરનેજ પોતાનો શત્રુ ગણી તેને કરડવા ધસે છે; જ્યારે સિંહનો સ્વભાવ ખરા શત્રુનો પીછો પકડવાનો છે અર્થાત્ જો કોઈ એને બાણ મારે, તો તે બાણ પ્રતિ નહિ દોડતાં, બાણ મારનાર તરફ તે સામો થાય છે. એજ વાત ઉપર નીચેનો શ્લોક પણ પ્રકાશ પાડે છે.

" उपेक्ष्य लोष्टक्षेप्तारं, लोष्टं दशति मण्डलः ।
मृगारिः शरमुत्प्रेक्ष्य, शरक्षेप्तारमृच्छति ॥ "

આ ઉપરથી જોઈ શકાય છે કે ક્રોધનું કારણ અજ્ઞાન છે. એવીજ રીતે વિચારતાં એ પણ સમજી શકાય તેમ છે કે જાતિ, લાભ, કુલ, ઐશ્વર્ય, બલ, રૂપ, તપ અને શ્રુત એ આઠ પૈકી ગમે તે વિષયક ગર્વ કરનાર મનુષ્ય પણ તેવી ભૂલ અજ્ઞાનવશાત્ કરે છે. કહેવાનું તાત્પર્ય એ છે કે અજ્ઞાનરૂપ અંધકારમાં અથડાતાં કૂટાતાં પણ પૂર્વ પૂણ્યને લઈને કદાચ સન્મતિરૂપ પ્રકાશ પ્રાપ્ત થાય, તો તો અજ્ઞાનને લીધે સંસારમાં કર્યા કરવી પડતી રખડપટ્ટીનો અંત આવે; બાકી તો એક પછી એક યોનિ[1]માં પરિભ્રમણ કર્યાજ કરવું પડે.

श्रीसिद्धान्तस्वरूपम्—

सिद्धान्त ! सिद्धपुरुषोत्तमसंप्रणीतो
विश्वात्रबोधक ! रणोदरदारधीरः ।
भव्यानपायजलधेः प्रकटस्वरूप—
विश्वाऽव बोधकरणोऽदरदारधीरः ॥ ११ ॥

—वसन्त०

---

૧ જૈન શાસ્ત્ર પ્રમાણે યોનિની સંખ્યા ચોર્યાસી લાખની છે. આ સંબંધમાં વિશેષ માહિતી સારૂ જુઓ ન્યાયકુસુમાંજલિ ( પૃ૦ ૩૦૧-૩૦૨ ).

**विस्मित** ( મૂ૦ )=(૧) અચંબો પામેલ; (૨) ખીલેલ.
**वीथी** ( સ્ત્રી૦ )=(૧) માર્ગ; (૨) હાર, શ્રેણિ.
**वीर** ( પું૦ )=**વીર**, ચોવીસમા તીર્થંકર.
**वृजिन** ( ન૦ )=પાપ.
**वृत्** ( ૨, આ૦ )=હોવું; निवृत्=વિરામ પામવું.
**वृत्ति** ( સ્ત્રી૦ )=વળણુ.
**वृद्धि** ( સ્ત્રી૦ )=આબાદી.
**वृन्द** ( ન૦ )=સમુદાય.
**वृष्टि** ( સ્ત્રી૦ )=વરસાદ.
**वैर** ( ન૦ )=દુશ્મનાવટ.
**व्यथ्** ( ૧, આ૦ )=દુઃખી થવું.
**व्रज** ( પું૦ )=સમુદાય.

## श

**श** ( ન૦ )=સુખ.
**शत्रु** ( પું૦ )=દુશ્મન.
**शब्द** ( પું૦ )=શબ્દ.
**शम्** ( ૪, પ૦)=શાન્ત થવું.
**शम** ( પું૦ )=ઉપશમ.
**शमथ** ( પું૦ )=શાન્તિ.
**शमन** ( ન૦ )=શાન્તિ.
**शमवत्** ( વિ૦ )=ઉપશમધારી.
**शमिन्** ( વિ૦ )=ઉપશમધારી.
**शय** ( પું૦ )=હાથ.
**शर्मन्** ( ન૦ )સુખ.
**शस्त** ( ન૦ )=કલ્યાણુ.
**शात** ( પું૦ )=ક્ષય.
**शान्ता** ( સ્ત્રી૦ )=**શાન્તા**, સાતમા તીર્થંકરની શાસન-દેવી.
**शान्ति** ( પું૦ )=**શાન્તિ**(નાથ), જૈનોના સોળમા તીર્થંકર.
**शान्ति** ( સ્ત્રી૦ )=(૧) કલ્યાણુ; (૨) નાશ.
**शाप** ( પું૦ )=શાપ દેવો તે.
**शासन** ( ન૦ )=આજ્ઞા.
**शास्त्र** ( ન૦ )=શાસ્ત્ર, ધાર્મિક પુસ્તક.
**शिखिन्** ( પું૦ )=અગ્નિ.
**शिव** ( ( પું૦ )=મોક્ષ.
**शिव** ( ન૦ )=કલ્યાણુ.
**शिव** ( ત્રિ૦ )=કલ્યાણુકારી.
**शीतरुचि** ( પું૦ )=ચન્દ્ર.
**शुच्** ( ૧, પ૦ )=શોક કરવો.
**शुचि** ( પું૦ )=અગ્નિ.
**शुद्ध** ( ત્રિ૦ )=નિર્મળ.
**शैल** ( પું૦ )=પર્વત.
**शोक** ( પું૦ )=દિલગીરી.
**शोभन** ( વિ૦ )=સુન્દર.
**शोभा** ( સ્ત્રી૦ )=શોભા.
**श्यामा** ( સ્ત્રી૦ )=(૧) રાત્રિ; (૨) **શ્યામા**, છઠ્ઠા તીર્થંકરની શાસન-દેવી.
**श्याम** ( ત્રિ૦ )=કૃષ્ણુ, કાળું.
**श्री** ( સ્ત્રી૦ )=(૧) માનવાચક શબ્દ; (૨) લક્ષ્મી; (૩) શોભા.
**श्रीजात** ( પું૦ )=કામદેવ.
**श्रेणी** ( સ્ત્રી૦ )=પંક્તિ, હાર.
**श्रेयस्** ( ન૦ )=(૧) કલ્યાણુ; (૨) નિર્વાણુ, મોક્ષ.
**श्रेयांस** ( પું૦ )=**શ્રેયાંસ(નાથ)**, જૈનોના અગ્યારમા તીર્થંકર.
**श्रोत्र** ( ન૦ )=કાન.

## स

**संरम्भ** ( પું૦ )=ક્રોધ.
**संवर** ( પું૦ )=(૧) **સંવર**; (૨) સંયમ.
**संसार** ( પું૦ )=સંસાર, ભવ.
**संस्तव** ( પું૦ )=પરિચય.
**संहति** ( સ્ત્રી૦ )=સમૂહ.
**सकल** ( ત્રિ૦ )=સમસ્ત, સર્વ.
**सक्त** ( મૂ૦ )=આસક્ત, લીન.
**सङ्कोच** ( પું૦ )=બીડાઇ જવું તે.
**सङ्ग** ( પું૦ )=પ્રસંગ, સોબત.
**सङ्गति** ( સ્ત્રી૦ )=સોબત.
**सङ्गमन** ( ન૦ )=(૧) એકઠા મળવું તે; (૨) ગમન.

सङ्घ ( पुं० )=સાધુ, સાધ્વી, શ્રાવક અને શ્રાવિકાનો સમુદાય.
सत् ( वि० )=(૧) ઉત્તમ; (૨) વિદ્યમાન.
सत्त्व ( पुं०, न० )=જીવ, પ્રાણી.
सत्य ( वि० )=સાચું.
सदन ( न० )=ગૃહ, ઘર.
सदस् ( स्त्री० )=સભા.
सदा ( अ० )=દરરોજ.
सन्तमस ( न० )=ગાઢ અજ્ઞાન.
सन्दोह ( पुं० )=સમુદાય.
सन्धा ( स्त्री० )=પ્રતિજ્ઞા.
सभा ( स्त्री० )=સભા.
सपत्न ( पुं० )=શત્રુ.
सपदि ( अ० )=એકદમ.
सम ( त्रि० )=(૧) સમગ્ર; (૨) સાધારણ.
समता ( स्त्री० )=સમભાવ.
समम् ( अ० )=સાથે.
समस्त ( वि० )=સંપૂર્ણ.
समान ( वि० )=તુલ્ય.
समुदित ( भू० )=રૂડી રીતે ઉદયમાં આવેલ.
समूह ( पुं० )=સમુદાય.
समृद्धि ( स्त्री० )=સંપત્તિ.
समेत ( भू० )=એકત્રિત થયેલ.
सम्पद् ( स्त्री० )=સંપત્તિ, વૈભવ.
सम्पन्न ( भू० )=ઉત્પન્ન થયેલ.
सम्भव ( पुं० )=સંભવ(નાથ), જૈનોના ત્રીજા તીર્થંકર.
सम्भिद् ( स्त्री० )=ભેદનારી.
सम्भिन्न ( भू० )=ખીલેલ.
सम्यच् ( वि० )=યથાર્થ.
सविध ( वि० )=સમીપ, પાસેનું.
सराग ( वि० )=રાગી.
सरूप ( वि० )=સમાન રૂપવાળું.
सर्व ( स० )=બધું.
सर्वज्ञ ( वि० )=બધું જાણનાર.
सह ( अ० )=સાથે.
सहस्र ( न० )=હજાર.
सहस्रपत्र ( न० )=હજાર પાંખડીવાળું કમળ.
सा ( स्त्री० )=લક્ષ્મી.
सागर ( पुं० )=દરિયો.
सामज ( पुं० )=કુંજર, હાથી.
सार ( त्रि० )=(૧) શ્રેષ્ઠ; (૨) વિચિત્ર વર્ણવાળું.
सारङ्ग ( पुं० )=હરણ.
सारस ( न० )=કમળ.
सार्थ ( पुं० )=સમુદાય.
सार्धम् ( अ० )=સાથે.
सार्व ( पुं० )=તીર્થંકર.
सित ( भू० )=બાંધેલ.
सिता ( स्त्री० )=સાકર.
सिद्ध ( पुं० )=(૧) મોક્ષે ગયેલ; (૨) તીર્થંકર.
सिद्ध ( भू० )=નિષેધ કરેલ.
सिद्धान्त ( पुं० )=આગમ, શાસ્ત્ર.
सिद्धि ( स्त्री० )=(૧) મુક્તિ; (૨) લબ્ધિ, શક્તિ-વિશેષ.
सिद्धार्थ ( पुं० )=સિદ્ધાર્થ (રાજા).
सिंहासन ( न० )=સિંહાસન.
सीमन्तिनी ( स्त्री० )=નારી.
सु ( अ० )=શ્રેષ્ઠતાવાચક શબ્દ; (૨) અત્યંતતા-સૂચક અવ્યય.
सुकृतिन् ( वि० )=સારાં કાર્યો કરનાર.
सुख ( न० )=સુખ.
सुचिरम् ( अ० )=ઘણા કાળ સુધી.
सुजन ( पुं० )=સજ્જન.
सुत ( पुं० )=પુત્ર.
सुतारका ( स्त्री० )=સુતારકા, નવમા તીર્થંકર-ની શાસન-દેવી.
सुदर्शन ( पुं० )=સુદર્શન ( રાજા ).
सुधा ( स्त्री० )=અમૃત.
सुधाकर ( पुं० )=ચન્દ્ર.
सुधाम ( पुं० )=ચન્દ્ર.

सुधारश्मि ( पुं० )=ચન્દ્ર.
सुपर्ण ( पुं० )=ગરૂડ.
सुपार्श्व ( पुं० )=સુપાર્શ્વ(નાથ), જૈનોના સાતમા તીર્થંકર.
सुमति ( पुं० )=સુમતિ(નાથ), જૈનોના પાંચમા તીર્થંકર.
सुमनस् ( पुं० )=દેવ.
सुमनस् ( न० )=પુષ્પ.
सुवर्ण ( न० )=સોનું.
सुव्रतत्व ( न० )=સુંદર વ્રતપણું.
सृज ( ६, प० )=કરવું.
सुविधि ( पुं० )=સુવિધિ(નાથ), જૈનોના નવમા તીર્થંકર.
सेक ( पुं० )=સિંચન.
सुमेरु ( पुं० )=મેરૂ ( પર્વત ).
सुर ( पुं० )=દેવ.
सुरभि ( स्त्री० )=ગાય.
सुरी ( स्त्री० )=દેવી.
सेना ( स्त्री० )=સૈન્ય, ફોજ.
सेव् ( १, आ० )=સેવવું; परिसेव्=સેવવું.
सेव्य ( वि० )=સેવવા લાયક.
सेवधि ( पुं० )=નિધિ, ભંડાર.
सेवा ( स्त्री० )=સેવા, ભક્તિ.
सौख्य ( न० )=સુખ.
सो ( ४, प० )=નાશ કરવો.
सौध ( पुं०, न० )=મહેલ.
स्तव ( पुं० )=સ્તુતિ.
स्तु ( २, उ० )=સ્તુતિ કરવી.
स्तृ ( ९, उ० )=ફેલાવવું.
स्थान ( न० )=ધામ, સ્થળ.
स्थित ( भू० )=રહેલું.
स्पृश् ( ६, प० )=અડકવું.
स्फट ( पुं० )=સાપની ફેણ.
स्फटा ( स्त्री० )=સાપની ફેણ.
स्फटिक ( पुं० )=સ્ફટિક ( રત્ન ).
स्फटिन् ( पुं० )=સાપ.
स्मर ( पुं० )=કામદેવ.
स्मृ ( १, प० )=યાદ કરવું.
स्मृति ( स्त्री० )=સ્મરણ.
स्मेर ( वि० )=હસમુખું, હાસ્યથી યુક્ત.
स्याद्वादिन् ( वि० )=સ્યાદ્વાદી.
स्व ( पुं०, न० )=ધન.
स्व ( वि० )=નિજ, પોતાનું.
स्वरूप ( न० )=સ્વરૂપ.

## ह

हन् ( २, प० )=હણવું.
हर ( वि० )=હરનાર.
हरि ( पुं० )=(૧) સિંહ; (૨) યમ; (૩) નાશ; (૪) સૂર્ય; (૫) પવન.
हस् ( १, प० )=હસવું.
हव्य ( न० )=હોમવા લાયક પદાર્થ.
हव्यभुज ( पुं० )=અગ્નિ.
हानि ( स्त्री० )=નાશ.
हारिन् ( वि० )=મનોહર.
हिंस् ( ७, प० )=નાશ કરવો.
हि ( अ० )=નિશ્ચયવાચક અવ્યય.
हित ( वि० )=કલ્યાણકારી.
हिम ( न० )=બરફ.
हिम ( वि० )=શીતલ.
हृ ( १, प० )=હરવું; निहृ=નિરાકાર કરવો.
हृद् ( न० )=અંતઃકરણ.
हृद्य ( वि० )=મનોહર.
हृदय ( न० )=અંતઃકરણ.
हे ( अ० )=હે, સંબોધનવાચક શબ્દ.
हेतु ( पुं० )=હેતુ, યુક્તિ.
हेला ( स्त्री० )=લીલા.
हेलि ( पुं० )=સૂર્ય.
हेलित ( वि० )=તિરસ્કાર કરેલ.

# श्रीचतुर्विंशतिजिनानन्दस्तुतिपद्यानामनुक्रमणी



# स्पष्टीकरणसाधनीभूतग्रन्थसूची

## ( સ્પષ્ટીકરણમાં સાધનરૂપ ગ્રન્થોની સૂચી )

| जैनग्रन्थाः | कर्तारः |
|---|---|
| कल्याणमन्दिरस्तोत्रम् | श्री' सिद्धसेनदिवाकरः ' |
| भक्तामरस्तोत्रम् | श्री' मानतुङ्ग 'सूरिः |
| अभिधानचिन्तामणिः | कालिकालसर्वज्ञश्री' हेमचन्द्र 'सूरिः |
| योगशास्त्रम् | " |
| त्रिषष्टिशलाकापुरुषचरित्रम् | " |
| स्तुतिचतुर्विंशतिका | श्री' शोभन 'मुनीश्वरः |
| निर्वाणकलिका | श्री' पादलिप्त 'सूरिः |
| प्रवचनसारोद्धारवृत्तिः | श्री' सिद्धसेन 'सूरिः |
| आचारदिनकरः | श्री' वर्धमान 'सूरिः |
| तत्त्वार्थाधिगमसूत्रभाष्यम् | वाचकवर्यश्री' उमास्वातिः ' |
| तत्त्वार्थाधिगमसूत्रटीका | श्री' सिद्धसेन 'गणिः |
| शृङ्गारवैराग्यतरङ्गिणी | श्री' सोमप्रभ 'सूरिः |
| उपमितिभवप्रपञ्चा कथा | मुनिवर्यश्री' सिद्धर्षिः' |
| वैराग्यकल्पलता | न्यायाचार्य-न्यायविशारद-<br>महामहोपाध्यायश्री' यशोविजयः' |
| मोहपराजयनाटकम् | श्री' यशःपालः' |
| कुमारपालचरित्रम् | श्री' जयसिंह 'सूरिः |
| अमरकोशः | श्री' अमरसिंह 'सूरिः |
| चउक्कसाय | पूर्वाचार्यः |
| बृहत्-टिप्पनिका | |
| न्यायकुसुमाञ्जलिः | न्यायतीर्थ-न्यायविशारद-<br>मुनिश्री' न्यायविजयः' |
| सिद्धाणं बुद्धाणं | पूर्वमुनिवर्यः |
| देवागमस्तोत्रम् ( आप्तमीमांसा ) | श्री' समन्तभद्रः ' |
| देवागमस्तोत्रभाष्यम् | श्री' अकलङ्कदेवः ' |
| देवागमस्तोत्रटीका | श्री'वसुनन्दिः' |
| अष्टसहस्री | श्री'विद्यानन्द'स्वामी |
| आप्तपरीक्षा | " |

| જૈન ગ્રન્થ | કર્તા |
|---|---|
| વિષયવાસનાત્યાગ | ચિદાનન્દજી |
| ભક્તામરસમસ્યારૂપ કાવ્યસંગ્રહનો પ્રથમ વિભાગ ( પરિશિષ્ટ ) | પ્રકાશક–શ્રીઆગમોદય સમિતિ |
| જૈનગ્રન્થાવલી | પ્રસિદ્ધકર્તા–શ્રી જૈનશ્વેતાંબર કૉન્ફરન્સ |
| **अजैनग्रन्थाः** | **कर्तारः** |
| छान्दोग्योपनिषद् | |
| वामनपुराणम् | |
| गीतगोविन्दम् | कविराजश्री' जयदेवः' |
| श्रुतबोधः | कवीश्वरश्री' कालिदासः' |
| काव्यप्रकाशः | श्री' मम्मटः' |
| सारस्वतव्याकरणम् | श्री' अनुभूतिस्वरूपा 'चार्यः |
| वैराग्यशतकम् | महर्षिश्री' भर्तृहरिः' |
| શબ્દ ચિંતામણિ | યોજક–સવાઇલાલ વિ. છોટાલાલ. |



# समास-विग्रहः

१—आनन्दस्य मन्दिरं आन० 'तत्पुरुषः', तत् आन० । ऋद्धिरेव विश्वं ऋद्धि० 'कर्मधारयः', ऋद्धिविश्वे नाभेयः ऋद्धि० 'तत्पुरुषः' तत्संबोधनं ऋद्धि० । देवैः महितः देव० 'तत्पुरुषः', तं देव० । केन सहितः सकः 'बहुव्रीहिः', सकश्चासौ लाभश्च सक० 'कर्मधारयः', तद्वन्तं सक० । भव एव योधः भव० 'कर्मधारयः', तं भव० । नाभेरपत्यं पुमान् नाभेयः, नाभेयश्चासौ देवश्च नाभेय० 'कर्मधारयः', तं नाभेय० । न हितं अहितं 'नञ्तत्पुरुषः', तं अहितम् ॥

२—तीर्थस्य राजानः तीर्थ० 'तत्पुरुषः', तेषां निकरः तीर्थ० 'तत्पुरुषः', तं तीर्थ० । पद्मवद् ईक्षणे यस्य स पद्मे० 'बहुव्रीहिः', तं पद्मे० । विविधाश्च ते वर्णाश्च विविध० 'कर्मधारयः', विविधवर्णान् जुषन्तीति विविधवर्णजुषि 'उपपद'समासः, तेषां विविध० । अंह्रिः एव पद्मं अंह्रि० 'कर्मधारयः', यस्य अंह्रिपद्मं यद० 'तत्पुरुषः', तस्मिन् यद० । प्रमदश्च आदरश्च प्रमदा० 'समाहारद्वन्द्वः', तेन प्रमदा० ॥

३—रागादीन् जयन्तीति जिनाः, जिनानां प्रवचनं जिन० 'तत्पुरुषः', तत् जिन० । सन्तश्च ते हेतवश्च सद्धेतवः 'कर्मधारयः', सद्धेतुभिः लाञ्छितं सद्धे० 'तत्पुरुषः', तत् सद्धे० । अङ्कजेन सहितं साङ्कजं 'बहुव्रीहिः', साङ्कजं च तद् आलं च साङ्क० 'कर्मधारयः', दितं साङ्कजालं येन तद् दित० 'बहुव्रीहिः' तद् दित० । वरा चासौ वित्तिश्च वर० 'कर्मधारयः', वरवित्तिरेव लक्ष्मीः वर० 'कर्मधारयः', तां वर० । न विद्यते तुला यस्याः सा अतुला 'बहुव्रीहिः', तां अतुलाम् । छितो मदो यैस्ते छित० 'बहुव्रीहिः', उदिता सा यस्मात् तत् उदित० 'बहुव्रीहिः', छितमदानां उदितसं छित० 'तत्पुरुषः', अङ्गानां जालं अङ्ग० 'तत्पुरुषः', छितमदोदितसं अङ्गजालं यस्मिन् तत् छित० 'बहुव्रीहिः', तत् छित० ॥

४—चला चक्षुर्यस्य स चल०, चलचक्षुवत् नेत्रे यस्याः सा चल० 'बहुव्रीहिः' । चक्रस्य ईश्वरी चक्रे० । न विद्यते तान्तिर्यस्यां सा अता० 'बहुव्रीहिः', तां अतान्तिम् । इरम्मदवत् आभा

यस्याः सा इरम्म० ‘बहुव्रीहिः’। हेलेः रुचिः हेलि० ‘तत्पुरुषः’, तद्वत् हेलि० नितम्बस्य चक्रं नितम्ब० ‘तत्पुरुषः’, विलसत् नितम्बचक्रं यस्याः सा विलसन्नि० ‘बहुव्रीहिः’। मदेन आभा यस्याः सा मदाभा ‘बहुव्रीहिः’॥

५—सती युक्तिर्यस्यां सा सद्युक्तिः ‘बहुव्रीहिः’, सद्युक्तिश्चासौ मुक्तिश्च सद्यु० ‘कर्मधारयः’, सद्युक्तिमुक्तिरेव तरुणी सद्यु० ‘कर्मधारयः’, सद्युक्तिमुक्तितरुण्यां निरतः सद्यु० ‘तत्पुरुषः’, तं सद्यु०। नवश्चासौ स्मरश्च नव० ‘कर्मधारयः’, रामाश्च नवस्मरश्च परे च रामा० ‘इतरेतरद्वन्द्वः’, निरस्ता रामानवस्मरपरा येन स निरस्त० ‘बहुव्रीहिः’, तं निरस्त०। शत्रूणां जातं शत्रु० ‘तत्पुरुषः’, जितं शत्रुजातं येन स जित० ‘बहुव्रीहिः’, तं जित०। अन्तरः जवः अन्त० ‘तत्पुरुषः’, तेन अन्त०। विजयायाः अङ्गजः विजया० ‘तत्पुरुषः’, तं विजया०। धर्म एव राः धर्मराः ‘कर्मधारयः’, आत्तः धर्मराः येन स आत्त० बहुव्रीहिः’। जिताः शत्रवो येन स जित०, जितशत्रोः जातः जित० ‘तत्पुरुषः’, तं जित०॥

६—विश्वस्य ईश्वरा विश्वे० ‘तत्पुरुषः’। प्रकृष्टः तापः प्रतापः ‘प्रादि’समासः, वामः प्रतापो येभ्यस्ते वाम० ‘बहुव्रीहिः’, मलश्च अस्तं च तमश्च विपक्षाश्च मला० ‘इतरेतरद्वन्द्वः’, वामप्रतापकाश्च ते मलास्ततमोविपक्षाः वाम० ‘कर्मधारयः’, विश्वायाः वामप्रतापकमलास्ततमोविपक्षाः विश्वा० ‘तत्पुरुषः’, विश्वे च ते विश्वावामप्रतापकमलास्ततमोविपक्षाश्च विश्व० ‘कर्मधारयः’ विशसनीकृताः विश्वविश्वावामप्रतापकमलास्ततमोविपक्षाः यैस्ते विश० ‘बहुव्रीहिः’। न विद्यते अन्तो यस्य सः अनन्तः ‘बहुव्रीहिः’, तं अनन्तम्। वामश्चासौ प्रतापश्च वाम० ‘कर्मधारयः’, वामप्रतापस्य कमला वाम० ‘तत्पुरुषः’, तमसो विपक्षः तमो०, वामप्रतापकमलया अस्तः तमोविपक्षः यैस्ते वाम० ‘बहुव्रीहिः’॥

७—पीयूषस्य पानं पीयूष० ‘तत्पुरुषः’। न विद्यते शेषो येषां ते अशेषाः ‘बहुव्रीहिः’, अशेषाश्च ते पुंसश्च अशेष० ‘कर्मधारयः,’ तेषां अशेष०। निर्गता माया येभ्यस्ते निर्मायाः ‘बहुव्रीहिः’, मुत् च चरणं च मुच्चरणे ‘इतरेतरद्वन्द्वः’, मुच्चरणे करोतीति मुच्च० ‘उपपद’-समासः, निर्मायाणां मुच्चरणकृत् निर्माय० ‘तत्पुरुषः’। न अल्पं अनल्पं ‘नञ्तत्पुरुषः’, तद् अन०। निर्गता माया यस्मात् तत् निर्मायं ‘बहुव्रीहिः’। उच्चं च रणं च उच्च० ‘कर्मधारयः’, उच्चरणं कृन्ततीति उच्च० ‘उपपद’समासः। भवस्य तोदो भव० ‘तत्पुरुषः’, भवतोदस्य दानं यस्य तत् भव० ‘बहुव्रीहिः’॥

८—श्रेय एव परागः श्रेयःप० ‘कर्मधारयः’, श्रेयःपरागस्य नलिनी श्रेयःपराग० ‘तत्पुरुषः’। नवं अङ्गं यस्याः सा नवा० ‘बहुव्रीहिः’। अजितं बलं यस्याः सा अजित०। कल्याणानां कोटिः कल्याण० ‘तत्पुरुषः’, तां कल्याण०। अमेन आमेन वा सहितः सामः

'बहुव्रीहिः', तस्मिन् सामे। परैः अजितं पराजितं 'तत्पुरुषः', पराजितं बलं यस्याः सा परा० 'बहुव्रीहिः'। न विद्यते दुरितानि यस्यां सा अदुरिता 'बहुव्रीहिः'॥

९—दुःखेन लभ्यते इति दुर्लभा। भवं बिभ्रतीति भव० 'उपपद'समासः, तेषां भव०। ऋभूणां वल्लरी ऋभु० 'तत्पुरुषः'। न मितः अमितः 'नञ्तत्पुरुषः', अमितश्चासौ द्रुमश्च अमित० 'कर्मधारयः', मान एव अमितद्रुमः मानामित० 'कर्मधारयः', हिमं इव आभा यस्य स हिमाभः 'बहुव्रीहिः', मानामितद्रुमे हिमाभः माना० 'तत्पुरुषः', तत्सं० माना०। अरीणां जातं अरि० 'तत्पुरुषः', जितं अरिजातं येन स जितारि० 'बहुव्रीहिः', तत्सं० जितारि०। श्रिया युक्तः सम्भवः श्री० 'मध्यमपदलोपी' समासः, श्रीसम्भवश्चासौ ईशश्च श्री० कर्मधारयः', तत्सं० श्री०। भवं भिनत्तीति भव० 'उपपद'समासः। न विद्यते मानं यस्याः सा अमाना 'बहुव्रीहिः'। महिम्नः आभा महिमाभा 'तत्पुरुषः', मितद्रु० महिमाभा यस्य स मितद्रु० 'बहुव्रीहिः', तत्सं० मितद्रु०। जिता अरयो येन स जिता०, जितारेः जातः जितारि० 'तत्पुरुषः', तत्सं० जितारि०॥

१०—पङ्कजिन्याः हृद् पङ्क० 'तत्पुरुषः', पङ्कजिनीहृदः ईशाः पङ्क० 'तत्पुरुषः', जिना एव पङ्कजिनीहृदीशाः जिन० 'कर्मधारयः'। कोपश्च मानश्च कोप० 'इतरेतरद्वन्द्वः', नितरां कोपमानौ निष्कोप० 'प्रादि'समासः, निष्कोपमानयोः करणं येभ्यस्तानि निष्कोप० 'बहुव्रीहिः', तानि निष्कोप०। ज्ञानं एव द्युत् ज्ञान० 'कर्मधारयः', तया ज्ञान०। बहवश्च ते भवाश्च बहु० 'कर्मधारयः', बहुभवानां भ्रमणं बहु० 'तत्पुरुषः', तेन बहु०। तप्तं च निष्कं च तप्त० 'कर्मधारयः', तप्तनिष्कस्य उपमानं येषां तानि तप्त० 'बहुव्रीहिः', तप्तनिष्कोपमानानि करणानि येषां ते तप्त० 'बहुव्रीहिः'॥

११—पुरुषेषु उत्तमाः पुरुषो० 'तत्पुरुषः', सिद्धाश्च ते पुरुषोत्तमाश्च सिद्ध० 'कर्मधारयः', सिद्धपुरुषोत्तमैः संप्रणीतः सिद्ध० 'तत्पुरुषः'। विश्वस्य अवबोधकः विश्वा० 'तत्पुरुषः', तत्सं० विश्वा०। रणस्य उदरं रणो० 'तत्पुरुषः', रणोदरस्य दारः रणो० 'तत्पुरुषः', रणोदरदारे धीरः रणो० 'तत्पुरुषः'। अपाय एव जलधिः अपाय० 'कर्मधारयः', तस्य अपाय०। प्रकटं स्वरूपं यस्याः सा प्रकट० 'बहुव्रीहिः', प्रकटस्वरूपा विश्वा यस्मिन् स प्रकट० 'बहुव्रीहिः', तत्सं० प्रकट०। बोधस्य करणं यस्य स बोध० 'बहुव्रीहिः'। दरश्च दाराश्च दर० 'इतरेतरद्वन्द्वः', न विद्यन्ते दरदारा यस्यां सा अदर० 'बहुव्रीहिः', अदरदारा चासौ धीश्च अदर० 'कर्मधारयः', अदरदारधियं रातीति अदर० 'उपपद'समासः॥

१२—माकन्दस्य मञ्जरिः माकन्द० 'तत्पुरुषः'। अन्यैः भ्रियन्ते इति अन्यभृतः, तेषां अन्य०। दुरितानां अरिरिव अरिः दुरि०। न विद्यते कलं यस्यां सा अकला 'बहुव्रीहिः'।

दारिद्र्यं करोतीति दारिद्र्य० 'उपपद'समासः। सह पततीति सपत्नः, सपत्नश्चासौ जनश्च सपत्न० 'कर्मधारयः', तस्मिन् सपत्न०। अतिशायिनं दुःखं अति० 'प्रादि'समासः, अतिदुःखं ददातीति अति० 'उपपद'समासः, तस्मिन् अति०। वैरस्य सा यस्य स वैरसः 'बहुव्रीहिः', तस्मिन् वैरसे। दुरितं एव अरिः दुरिता० 'कर्मधारयः', दुरितारेः रसः दुरिता० 'तत्पुरुषः', विगतो दुरितारिरसो यस्याः सा विदुरिता० 'बहुव्रीहिः'॥

१३—निर्गतः शेषो येभ्यस्तानि निःशेषाणि 'बहुव्रीहिः', निःशेषाणि च तानि सत्त्वानि च निःशेष० 'कर्मधारयः', निःशेषसत्त्वानां परिपालनं निःशेष० 'तत्पुरुषः', सत्या सन्धा यस्य स सत्य० 'बहुव्रीहिः', निःशेषसत्त्वपरिपालनाय सत्यसन्धः निःशेष० 'तत्पुरुषः'। भुवं पालयतीति भूपालः, भूपालश्चासौ संवरश्च भूपाल० 'कर्मधारयः', कुलं एव अम्बरं कुला० 'कर्मधारयः', भूपालसंवरस्य कुलाम्बरं भूपाल० 'तत्पुरुषः', पद्मस्य बन्धुरिव बन्धुः पद्म० 'तत्पुरुषः', भूपालसंवरकुलाम्बरस्य पद्मबन्धुः भूपाल० 'तत्पुरुषः', तत्सं० भूपाल०। भवानां भिद् भव० 'तत्पुरुषः', तस्यं भव०। विशेषेण नम्राः विनम्राः 'प्रादि'समासः, भुवं पान्तीति भूपाः, विनम्रा भूपा यस्य स विनम्र० 'बहुव्रीहिः', तत्सं० विनम्र०। संवरस्य कुलं यस्यां सा संवर० 'बहुव्रीहिः', तां संवर०। वरा पद्मा यस्य स वर० 'बहुव्रीहिः', तत्सं० वर०॥

१४—पाणौ जायन्ते इति पाणिजाः, यस्य पाणिजाः यत्पाणि० 'तत्पुरुषः', यत्पाणिजानां व्रजं यत्पाणि० 'तत्पुरुषः'। नीरे जायते इति नीरजं 'उपपद'समासः, बुद्धं च तत् नीरजं च बुद्ध० 'कर्मधारयः', धुतं बुद्धनीरजं येन तद् धुत० 'बहुव्रीहिः'। घर्मं करोतीति घर्मकरः, बालश्चासौ घर्मकरश्च बाल० 'कर्मधारयः', बालघर्मकरस्य पादा बाल० 'तत्पुरुषः', समस्ता चासौ पद्मा च समस्त० 'कर्मधारयः', बालघर्मकरपादवत् समस्तपद्मा यस्य तद् बाल० 'बहुव्रीहिः'। तीर्थं कुर्वन्तीति तीर्थकराः, तीर्थकराणां सार्थः तीर्थ० 'तत्पुरुषः' तत्सं० तीर्थ०। एन एव जम्बालं एनोज० 'कर्मधारयः', एनोजम्बाले घर्मः एनोज० 'तत्पुरुषः', तत्सं० एनोज०। करौ च पादौ च करपादं 'समाहारद्वन्द्वः', करपादेन समस्तं कर० 'तत्पुरुषः', करपादसमस्तं पद्मं येन तत् कर० 'बहुव्रीहिः'॥

१५—जिनानां मतं जिन० 'तत्पुरुषः', तस्मिन् जिन०। न मुद् अमुद् 'नञ्तत्पुरुषः', अमुदं ददत इति अमुद्दौ 'उपपद'समासः, आमश्च कामश्च आम० 'इतरेतरद्वन्द्वः', अमुद्दौ च तौ आमकामौ च अमु० 'कर्मधारयः', अमुद्दामकामयोः भिदा यस्मात् सः अमुद्द० 'बहुव्रीहिः', अमुद्दमकामभिदश्चासौ संवरश्च अमुद्द० 'कर्मधारयः', अमुद्दामकामभिदसंवरस्य हेतवः अमुद्द० 'तत्पुरुषः', अमुद्दामकामभिदसंवरहेतूनां लाभो यस्माद् यस्मिन् वा तद् अमुद्द० 'बहुव्रीहिः', तस्मिन् अमुद्द०। चण्डा द्युतिर्यस्य स चण्ड० 'बहुव्रीहिः', तस्मिन्

चण्ड० । सन् चासौ प्रकाशश्च सत्प्र० 'कर्मधारयः', तं सत्प्र० । उद्दामश्चासौ कामश्च उद्दाम० 'कर्मधारयः', उद्दामकामस्य भिद् उद्दाम० 'तत्पुरुषः', न संवरः असं० 'नञ्तत्पुरुषः', उद्दामकामभित् चासौ असंवरश्च उद्दाम० 'कर्मधारयः', उद्दामकामभिदसंवरं हन्तीति उद्दाम० 'उपपद'समासः, तस्मिन् उद्दाम० । अतुला आभा यस्य सः अतु० 'बहुव्रीहिः', तस्मिन् अतु० ॥

१६—धर्मस्य द्विषः धर्म० 'तत्पुरुषः', तेषां धर्म० । न धर्मः अधर्मः 'नञ्तत्पुरुषः', अधर्मं जुषन्तीति अधर्म० 'उपपद'समासः, तेषां अधर्म० । सुरभौ यातं सुरभि० 'तत्पुरुषः', सुरभियातं वपुः यस्याः सा सुरभि० 'बहुव्रीहिः' । रमः आयो यस्याः सा रमा० 'बहुव्रीहिः' । हृदयस्य वृत्तिः हृदय० 'तत्पुरुषः' । सारः ऊहो यस्याः सा सारो० 'बहुव्रीहिः' । सुराणां भीः सुर० 'तत्पुरुषः', तया सुर० ॥

१७—पादौ एव पद्मे पाद० 'कर्मधारयः', पादपद्मयोः सक्ता पाद० 'तत्पुरुषः' । न मिता अमिता 'नञ्तत्पुरुषः' । शोभनं मनो येषां ते सुम० 'बहुव्रीहिः' तेषां सुम० । शोभना मतिर्यस्य स सुमतिः, तत्सं० सुमते ! । सिद्धेः समृद्धिः सिद्धि० 'तत्पुरुषः', सिद्धि-समृद्धेः वृद्धिः सिद्धि० 'तत्पुरुषः' । सद्भिः कामिता सत्का० 'तत्पुरुषः' । सुष्ठु मतं सुमतं 'प्रादि'समासः, तेन सुमतेन ॥

१८—अज्ञानं एव घस्मरः अज्ञान० 'कर्मधारयः', अज्ञानघस्मरस्य पराभवः अज्ञान० 'तत्पुरुषः', अज्ञानघस्मरपराभवस्य भा अज्ञान० 'तत्पुरुषः', तां अज्ञान० । दुःखं एव अम्बुधिः दुःखा० 'कर्मधारयः', तस्मिन् दुःखा० । अघं च स्मरश्च परे च अघ० 'इतरेतर-द्वन्द्वः', न विद्यन्ते अघस्मरपरे यस्याः सा अनघ० 'बहुव्रीहिः' । भवं भजन्तीति भव० 'उपपद'समासः, तानि भव० ॥

१९—कुत्सिता चासौ मतिश्च कुमतिः 'कर्मधारयः', तां कु० । कुत्सिताश्च ते पक्षाश्च कुपक्षाः 'कर्मधारयः', तैः कु० । न जितानि अजितानि 'नञ्तत्पुरुषः', अजितानि पदानि यस्याः सा अजित० 'बहुव्रीहिः' । शिवं रातीति शिव० 'उपपद'समासः । शैल एव विज्ञानं शैल० 'कर्मधारयः', शैलविज्ञानेन राजितौ शैल० 'तत्पुरुषः', शैलविज्ञानराजितौ पदौ यस्य स शैल० 'बहुव्रीहिः' तेन शैल० । शिवेन राजते इति शिव० 'उपपद'समासः, तेन शिव० ॥

२०—उद्यन्ती गदा यस्याः सा उद्य० 'बहुव्रीहिः' । मृगमदेन आविलं मृग० 'तत्पुरुषः', कज्जलस्य अङ्कं कज्ज० 'तत्पुरुषः', मृगमदाविलं च कज्जलाङ्कं च मृग० 'कर्मधारयः', मृगमदाविलकज्जलाङ्कवत् काली मृग० 'कर्मधारयः' । शोभना रीतिर्यस्यां सा सु० 'बहुव्रीहिः',

सुरीतिश्चासौ मतिश्च सुरीति० 'कर्मधारयः', सुरीतिमतिं रातीति सुरीति० 'उपपद'समासः। राजतां अन्तः राज० 'तत्पुरुषः', जितः राजदन्तो यया सा जित० 'बहुव्रीहिः'। मर्मणो जननी मर्म० 'तत्पुरुषः', तां मर्म०। अतिराजितौ राजदन्तौ यस्याः सा अति० 'बहुव्रीहिः'॥

२१—भव्याश्च ते अङ्गिनश्च भव्या० 'कर्मधारयः', भव्याङ्गिन एव वारिजानि भव्या० 'कर्मधारयः', भव्याङ्गिवारिजानां विबोधः भव्या० 'तत्पुरुषः', भव्याङ्गिवारिजाविबोधे रविः भव्या० 'तत्पुरुषः'। पद्मं च प्रभेशश्च पद्मप्रभेशौ 'इतरेतरद्वन्द्वः', नवीनौ च तौ पद्मप्रभेशौ च नवीन० 'कर्मधारयः', नवीनपद्मप्रभेशवत् करणं यस्य स नवीन० 'बहुव्रीहिः'। मुक्तिरेव कान्ता मुक्ति० 'कर्मधारयः', अर्जिता मुक्तिकान्ता येन सः अर्जित० 'बहुव्रीहिः'। निर्वृतेः सुखं निर्वृति० 'तत्पुरुषः', तत् निर्वृति०। पद्मस्येव प्रभा यस्य स पद्म०, पद्मप्रभश्चासौ ईशश्च पद्म० 'कर्मधारयः', तत्सं० पद्म०। करणानां ऊर्जितं करणो० 'तत्पुरुषः', तत् करणो०। उक्त्या कान्तः उक्ति० 'तत्पुरुषः'॥

२२—तुल्या गतिर्यस्य स तुल्य० 'बहुव्रीहिः', तत्सं० तुल्य०। मोहनं च तमश्च मोहन० 'इतरेतरद्वन्द्वः', विध्वस्ते मोहनतमसी येन स विध्वस्त० बहुव्रीहिः'। दानस्य वारि दान० 'तत्पुरुषः', नवं दानवारि यस्य स नव० 'बहुव्रीहिः', तस्य नव०। तीर्थं कुर्वन्तीति तीर्थङ्कराः 'उपपद'समासः, तीर्थङ्कराणां व्रजं तीर्थ० 'तत्पुरुषः', तत्सं० तीर्थ०। विभया अस्तः विभा० 'तत्पुरुषः', विभास्तः विधुर्येन तद् विभा० 'बहुव्रीहिः', तद् विभा०। अस्तः मोहो येन सः अस्त० 'बहुव्रीहिः', तत्सं० अस्त०। दानवानां अरयो दानवा० 'तत्पुरुषः', मानवाश्च दान-वारयश्च मानव० 'इतरेतरद्वन्द्वः', नताः मानवदानवारयः यस्य स नत० 'बहुव्रीहिः', तत्सं० नत०॥

२३—शब्दानां भरः शब्द० 'तत्पुरुषः', गम्भीरः शब्दभरो यस्मिन् स गम्भीर० 'बहुव्रीहिः', तत्सं० गम्भीर०। वादिन एव घूका वादि० 'कर्मधारयः', वादिघूकानां वीथी वादि० 'तत्पुरुषः', गर्विता चासौ वादिघूकवीथी च गर्वित० 'कर्मधारयः', कृतान्तस्य जनकः कृतान्त० 'तत्पुरुषः', गर्वितवादिघूकवीथ्यां कृतान्तजनकः गर्वित० 'तत्पुरुषः', गर्वितवादि-घूकवीथीकृतान्तजनकस्य उपमा यस्य स गर्वित० 'बहुव्रीहिः', तत्सं० गर्वित०। हारिणी शान्तिर्यस्मात् स हारि० 'बहुव्रीहिः'। जिनानां पतिः जिन० 'तत्पुरुषः', तस्य जिन०। अपवर्गस्य वीथी अपवर्ग० 'तत्पुरुषः', प्रवरा चासौ अपवर्गवीथी च प्रवरा० 'कर्मधारयः'। महान् चासौ अरिश्च महा० 'कर्मधारयः', कोप एव महारिः कोप० 'कर्मधारयः', जनानां कोपमहारिः जन० 'तत्पुरुषः', जनकोपमहारेः शान्तिर्यस्मिन् स जन० 'बहुव्रीहिः'॥

२४—वरस्य दायी वरदायी 'तत्पुरुषः', वक्त्रं एव श्यामावरः वक्त्र० 'कर्मधारयः, वरदायी वक्त्रश्यामावरो यस्याः सा वर० 'बहुव्रीहिः'। शोभनाश्च ते स्वाश्च

सुरवाः 'कर्मधारयः', सुरवैः शोचिताः सुरव० 'तत्पुरुषः', दैत्यानां रामाः दैत्य० 'तत्पुरुषः', सुरवशोचिताः दैत्यरामाः यया सा सुरव० 'बहुव्रीहिः'। न विद्यते अन्तो यस्य सः अनन्तः 'बहुव्रीहिः', अनन्तश्चासौ शोकश्च अनन्त० 'कर्मधारयः', तं अनन्त०। सुरस्य वशा सुर० 'तत्पुरुषः'। उचितं ददातीति 'उचि० 'उपपद'समासः॥

२५—अमृतं अशनं येषां ते अमृता० 'बहुव्रीहिः', तेषां अमृता०। रसायां रसाः रसा० 'तत्पुरुषः', रसारसानां पदं रसा० 'तत्पुरुषः'। शोभनौ पार्श्वौ यस्य स सुपार्श्वः, तं सु०। तारं च सारसं च तार० 'कर्मधारयः', तारसारसवत् पदौ यस्य स तार० 'बहुव्रीहिः', तं तार०। परं च तद् मानं च परमानं 'कर्मधारयः', तद्धन्तं पर०॥

२६—निर्गताः शेषा येभ्यस्ते निःशेषाः 'बहुव्रीहिः', निःशेषाश्च ते दोषाश्च निःशेष० 'कर्मधारयः', निःशेषदोषा एव रजन्यः निःशेष० 'कर्मधारयः', कजिनीनां ईशः कजि० 'तत्पुरुषः', निःशेषदोषरजनीषु कजिनीशः निःशेष० 'तत्पुरुषः', तं निःशेष०। संसारस्य पारः संसार० 'तत्पुरुषः', आप्तः संसारपारो येन तत् आप्त० 'बहुव्रीहिः', मण्डलश्च मानश्च मारश्च मण्डल० 'इतरेतरद्वन्द्वः', गताः मण्डलमानमारा यस्मात् तद् गत० 'बहुव्रीहिः', आप्तसंसारपारं च तद् गतमण्डलमानमारं च आप्त० 'कर्मधारयः', तद् आप्त०। प्राज्यश्चासौ प्रभावश्च प्राज्य० 'कर्मधारयः', प्राज्यप्रभावस्य भवनं प्राज्य० 'तत्पुरुषः', तत् प्राज्य०। भुवने अतिशायिनी भुवना० 'तत्पुरुषः', भुवनातिशायिनी सा यस्य तद् भुवना० 'बहुव्रीहिः', तद् भुवना०। साराश्च ते पारगताश्च सार० 'कर्मधारयः', सारपारगतानां मण्डलं सार० 'तत्पुरुषः', तत् सार०॥

२७—सर्वे च ते अर्थाश्च सर्वा० 'कर्मधारयः', सर्वार्थानां सार्थः सर्वा० 'तत्पुरुषः', सर्वार्थसार्थेन खचितं सर्वा० 'तत्पुरुषः', तत् सर्वा०। यतिषु इन्द्राः यती० 'तत्पुरुषः', यतीन्द्राणां भाराः यती० 'तत्पुरुषः', तत्सं० यती०। मानवानां इनाः मान० 'तत्पुरुषः', आनता मानवेना यस्य तद् आनत० 'बहुव्रीहिः', तद् आनत०। हेलया अवहेलितं हेला० 'तत्पुरुषः', कुत्सितं च तत् कर्म कु० 'कर्मधारयः', हेलाऽवहेलितं कुकर्म येन तत् हेला० 'बहुव्रीहिः', तत् हेला०। शर्मणः भा शर्म० 'तत्पुरुषः', शर्मभया राजि शर्म० 'तत्पुरुषः', तस्मै शर्म०। मान एव तमा मान० 'कर्मधारयः', नवश्चासौ इनश्च नवेनः 'कर्मधारयः', मानतमायां नवेनः मान० 'तत्पुरुषः', तं मान०॥

२८—जिनेषु सामजाः जिन० 'तत्पुरुषः' तेषां जिन०। न शिवं अशिवं 'नञ्-तत्पुरुषः', शान्तं अशिवं येन तत् शान्ता० 'बहुव्रीहिः', तत् शान्ता०। वसुधायां आशाः

वसु० 'तत्पुरुषः', वसुधामान् यतीति वसु० 'उपपद'समासः, वसुधाऽऽमदा ईहा यस्याः सा वसु० 'बहुव्रीहिः' ॥

२९—पूज्यैः अर्चितः पूज्या० 'तत्पुरुषः'। चतुराणां चित्तानि चतुर० 'तत्पुरुषः', चतुरचित्तानि एव चकोराः चतुर० 'कर्मधारयः', चतुरचित्तचकोराणां चक्रं चतुर० 'तत्पुरुषः', चतुरचित्तचकोरचक्रे चन्द्रः चतुर० 'तत्पुरुषः', तत्सं० चतुर०। प्रभावस्य भवनं प्रभाव० 'तत्पुरुषः'। मोहस्य सारं मोह० 'तत्पुरुषः', दितं मोहसारं येन स दित० 'बहुव्रीहिः'। संसार एव सागरः संसार० 'कर्मधारयः', संसारसागरस्य जलं संसार० 'तत्पुरुषः', तस्मिन् संसार०। चन्द्रस्येव प्रभा यस्य स चन्द्र०, तत्सं० चन्द्र०। भवैः नन्दि भव० 'तत्पुरुषः', भवनन्दि च तत् तमः भव० 'कर्मधारयः', भवनन्दितमः हन्तीति भव० 'उपपद' समासः, भवनन्दितमोहं सारं यस्य स भव० 'बहुव्रीहिः' ॥

३०—तीर्थानां ईशाः तीर्थे० 'तत्पुरुषः', तीर्थेशानां सार्थः तीर्थे० 'तत्पुरुषः', तत्सं० तीर्थे०। आरम्भ एव अगः आर० 'कर्मधारयः', आरम्भागे सामजः आर० 'तत्पुरुषः', तत्सं० आर०। तारा चासौ कान्तिश्च तार० 'कर्मधारयः', आननस्य तारकान्तिः आनन० 'तत्पुरुषः', समा आननतारकान्तिर्यस्य स समा० 'बहुव्रीहिः', तत्सं० समा०। सन्दोह एव राहुः सन्दोह० 'कर्मधारयः' सन्दोहराहोः बलं सन्दोह० 'तत्पुरुषः', सन्दोहराहुबलस्य निमथनं सन्दोह० 'तत्पुरुषः', तस्मिन् सन्दोह०। तमश्च संरम्भश्च आगश्च तमःसं० 'इतरेतर-द्वन्द्वः', तेषां तमःसं०। अजेन समानः अज० 'तत्पुरुषः', तत्सं० अज०। नतानां आरं नता० 'तत्पुरुषः', नतारस्य कं नता० 'तत्पुरुषः', नतारकस्य अन्तो यस्मात् स नता० 'बहुव्रीहिः', तस्मिन् नता० ॥

३१—सम्यग् दृष्टियेषां ते सम्य० 'बहुव्रीहिः', तेषां सम्य०। सती भा यस्याः सा सद्भा 'बहुव्रीहिः'। अतिशयेन वरा अति० 'प्रादि' समासः। मरस्य राजिः मर० 'तत्पुरुषः', मरराजिं गच्छतीति मर० 'उपपद' समासः, तस्मिन् मर०। सती चासौ भारती च सद्भा० 'कर्मधारयः'। रत्या वरा रति० 'तत्पुरुषः', अमराणां राजिः अमर० 'तत्पुरुषः', रतिवरा चासौ अमरराजिश्च रति० 'कर्मधारयः', रतिवरामरराज्या गेया रति० 'तत्पुरुषः' ॥

३२—सुधाकरस्य बिम्बं सुधा० 'तत्पुरुषः', नवं च तत् सुधाकरबिम्बं च नव० 'कर्मधारयः', नवसुधाकरबिम्बवद् दन्तौ यस्य स नव० 'बहुव्रीहिः', तं नव०। स्वश्चासौ अनेकपश्च स्वाने० 'कर्मधारयः', तं स्वाने०। कमलेन मुक्तः कमल० 'तत्पुरुषः', कमलमुक्त-श्चासौ घनाघनश्च कमल० 'कर्मधारयः', कमलमुक्तघनाघनवद् आभा यस्य स कमल० 'बहुव्रीहिः', तं कमल०। पुण्यमेव स्वं पुण्य० 'कर्मधारयः', समुपात्तं पुण्यस्वं यया सा

समु० 'बहुव्रीहिः' । पङ्कस्य मलः पङ्क० 'तत्पुरुषः', अनेकश्चासौ पङ्कमलश्च अनेक० 'कर्मधारयः', अनेकपङ्कमलेन मुक्तः अनेक० 'तत्पुरुषः', अनेकपङ्कमलमुक्तो घनो यस्याः सा अनेक० 'बहुव्रीहिः' । घना आभा यस्य स घनाभः 'बहुव्रीहिः', तं घनाभम् ॥

३३—इन्दुरिव यशांसि इन्दु० 'कर्मधारयः', तेषां इन्दु० । रामश्चासौ अङ्गजश्च रामा० 'कर्मधारयः', निरस्तो रामाङ्गजो येन स निरस्त० 'बहुव्रीहिः' । न विद्यते रुजा यस्य सः अरुजः 'बहुव्रीहिः', तत्सं० अरु० । शोभनो विधिर्यस्य स सु० 'बहुव्रीहिः', तत्सं० सु० । रामायाः अङ्गजः रामा० 'तत्पुरुषः', तत्सं० रामा० ॥

३४—अतिशयेन मतः अति० 'प्रादि'समासः । अतिशयेन चण्डः अति० 'प्रादि'-समासः, अतिचण्डश्चासौ भास्वांश्च अति० 'कर्मधारयः', अतिचण्डभास्वद्वत् महो यस्य सः अति० 'बहुव्रीहिः' । शिवमेव पूः शिव० 'तत्पुरुषः', तस्य शिव० । न यशः अयशः 'नञ्तत्पुरुषः', तस्मात् अयशस्तः । अपायेन रहितः अपाय० 'तत्पुरुषः' । जिनानां ओघः जिनौ० 'तत्पुरुषः' । भास्वत् महो यस्य स भास्व० 'बहुव्रीहिः' । शिवं पुरं यस्य स शिव० 'बहुव्रीहिः' । विधेयेन सहितं सविधेयं 'बहुव्रीहिः', सविधेयं शस्तं यस्य स सविधेय० 'बहुव्रीहिः' ॥

३५—प्रचुराणि च तानि पुण्यानि च प्रचुर० 'कर्मधारयः', प्रचुरपुण्यानां भराः प्रचुर० 'तत्पुरुषः', तैः प्रचुर० । विशेषेण नम्राः विनम्राः 'प्रादि'समासः, अपगता अपाया येभ्यस्ते अपा० 'बहुव्रीहिः', विनम्राश्च ते अपापायाश्च विनम्रा० 'कर्मधारयः', विनम्रापापाया मानवा यस्य स विनम्रा० 'बहुव्रीहिः', तं विनम्रा० । सुधारुचेः रङ्गः सुधा० 'तत्पुरुषः', सुधारु-चिरङ्ग इव तारं सुधा० 'कर्मधारयः', तत् सुधा० । भवतः वचनं भव० 'तत्पुरुषः', तद् भव० । पापस्य आयो यस्मात् स पापा० 'बहुव्रीहिः', पापायश्चासौ मानश्च पापा० 'कर्म-धारयः', व्यपास्तः पापायमानो येन स व्यपा० 'बहुव्रीहिः' तत्सं० व्यापा० । वसुधायां रुचिरं वसुधा० 'तत्पुरुषः', तद् वसुधा० । गतम् आरं यस्मात् तद् गता० 'बहुव्रीहिः', तद् गता० ॥

३६ वाचो विभवः वाग्वि० 'तत्पुरुषः', विशदश्चासौ वाग्विभवश्च विशद० 'कर्मधारयः', सारं च तद् अमृतं च सारा० 'कर्मधारयः', विशदवाग्विभवेन अभिभूतं सारामृतं यया सा विशद० 'बहुव्रीहिः । तारकाणां ईशः तार० 'तत्पुरुषः', शोभनश्चासौ तारकेशश्च सुतार० 'कर्मधारयः' आस्यमेव सुतारकेशः आस्य० 'कर्मधारयः', समुदित आस्यसुतारकेशो यस्याः सा समुदिता० 'बहुव्रीहिः' । उपप्लवानां चमूः उप० 'तत्पुरुषः', तां उप० । उचितस्य प्रदानं उचित० 'तत्पुरुषः', तस्मिन् उचित० । न विद्यते सारो यस्यां सा असारा 'बहुव्रीहिः,' तां असाराम् ॥

३७—पीडानां आगमः पीडा० 'तत्पुरुषः'। मर्त्यानां आनन्दः मर्त्या० 'तत्पुरुषः', दत्तो मर्त्यानन्दो येन स दत्त० 'बहुव्रीहिः', तं दत्त०। न तनूनि अतनूनि 'नञ्तत्पुरुषः', उद्भवश्च भयं च यशश्च उद्भव० 'इतरेतरद्वन्द्वः', अतनूनि च तानि उद्भवभययशांसि च अतनू० 'कर्मधारयः', तेषां अतनू०। प्रकृष्टा सिद्धिर्यस्य स प्रसिद्धिः 'बहुव्रीहिः', तत्सं० प्रसिद्धे!। नन्दायाः तनुः नन्दा० 'तत्पुरुषः', नन्दातन्वोः उद्भवो यस्य स नन्दा० 'बहुव्रीहिः', तत्सं० नन्दा०॥

३८—चित्तस्य वृत्तिः चित्त० 'तत्पुरुषः', यस्याः चित्तवृत्तिः यच्चित्त० 'तत्पुरुषः'। प्रशस्त आयो यया सा प्रश० 'बहुव्रीहिः'। तापं ददातीति ताप० 'उपपद'समासः, तत् ता०। मानवानां प्रकरः मानव० 'तत्पुरुषः', तत्सं० मानव०। याता आपद् यस्य यस्माद् वा स याता० 'बहुव्रीहिः', तं याता०। आरं च तमश्च रुजा च आलं च आर० 'इतरेतरद्वन्द्वः', सितानि आरतमोरुजालानि येन स सिता० 'बहुव्रीहिः', तं सिता०॥

३९—जिनानां आगमः जिना० 'तत्पुरुषः', तत्सं० जिना०। दव इव अरयः दवा० 'कर्मधारयः', दवारीणां हरः दवा० 'तत्पुरुषः', तस्मिन् दवा०। वर्णैः सहितं सवर्णं 'बहुव्रीहिः', तस्मिन् सवर्णे। आरम्भेण सहिता सारम्भा 'बहुव्रीहिः', सारम्भा चासौ आजिश्च सार० 'कर्मधारयः', सारम्भाजिरेव नागः सार० 'कर्मधारयः', सारम्भाजिनागस्य मदः सार० 'तत्पुरुषः', सारम्भाजिनागमदस्य वारि सार० 'तत्पुरुषः', सारम्भाजिनागमदवारिणि हरिः सार० 'तत्पुरुषः', तत्सं० सार०। न सवर्णं अस० 'नञ्तत्पुरुषः', तस्मिन् अस०॥

४०—जिनस्य पदं जिन० 'तत्पुरुषः', तत् जिन०। विशाला चासौ आपच्च विशाला० 'कर्मधारयः', विशालापत्तेः त्रायते इति विशाला० 'उपपद'समासः, तद् विशाला०। परश्चासौ आगमश्च परा० 'कर्मधारयः', परागमस्य धूः परा० 'तत्पुरुषः', तां परा०। आमश्च शोकश्च आम० 'इतरेतरद्वन्द्वः', विगतौ आमशोकौ यस्याः सा विगता० 'बहुव्रीहिः', तां विगता०। स्मेरं आननं यस्याः सा स्मेरा० 'बहुव्रीहिः', तां स्मेरा०। शोभनश्चासौ जनश्च सुजनः 'कर्मधारयः', तत्सं० सुजन!। परागेण मधुरं पराग० 'तत्पुरुषः', तत् पराग०॥

४१—सर्वं वेत्तीति सर्व० 'उपपद'समासः, श्रेयासश्चासौ सर्वविच्च श्रेयांस० 'कर्मधारयः', तं श्रेयांस०। अङ्गिनां गणः अङ्गि० 'तत्पुरुषः', तत्सं० अङ्गि०। त्रियामायाः कान्तः त्रियामा० 'तत्पुरुषः', त्रियामाकान्तवद् आननं यस्य स त्रियामा० 'बहुव्रीहिः', तं त्रियामा०। मान एव वातः मान० 'कर्मधारयः', तस्मिन् मान०। न विद्यते अन्तो यस्य सः अनन्त० 'बहुव्रीहिः', अनन्तो महिमा यस्य सः अनन्त० 'बहुव्रीहिः', तं अनन्त०। न मा अमा 'नञ्तत्पुरुषः'॥

४२—ऋभूणां सदः ऋभु० 'तत्पुरुषः'। शैलानां राजानः शैल० 'तत्पुरुषः', अंह्री एव शैलराजाः अंह्रि० 'कर्मधारयः', तान् अंह्रि०। अनन्तश्चासौ महिमा च अनन्त० 'कर्मधारयः' अनन्तमहिम्नः प्रभवो यस्याः सा अनन्त० 'बहुव्रीहिः', तां अनन्त०। आम्रानां निकरः आम्र० 'तत्पुरुषः', तं आम्र०। राकायाः राजा राका० 'तत्पुरुषः', राकाराजवद् आननं यस्य स राका० 'बहुव्रीहिः', तं राका०। न हिमा अहिमा 'नञ्तत्पुरुषः', अहिमा प्रभा यस्य सः अहिम० 'बहुव्रीहिः', अहिमप्रभवद् वामः कायो यस्य सः अहिम० 'बहुव्रीहिः', तं अहिम०॥

४३—निर्वाणस्य निर्वृतिः निर्वाण० 'तत्पुरुषः', निर्वाणनिर्वृतिं पुष्यन्तीति निर्वाण० 'उपपद'समासः, तेषां निर्वाण०। प्रचुरश्चासौ प्रमादश्च प्रचुर० 'कर्मधारयः', प्रचुरप्रमादस्य मारो यस्मिन् स प्रचुर० 'बहुव्रीहिः', तं प्रचुर०। भव एव अरिः भवा० 'कर्मधारयः,' भवारेः हरिर्यस्मात् स भवा० 'बहुव्रीहिः', तेन भवा०। समा चासौ मा च सम० 'कर्मधारयः', सममायाः आगमो यस्मिन् स सम० 'बहुव्रीहिः', तेन सम०। विद्वांश्चासौ जनश्च विद्व० 'कर्मधारयः'। आरम्भ एव वारि आर० 'कर्मधारयः' आरम्भवारिणि हरिः आर० 'तत्पुरुषः', तेन आर०॥

४४—सारा चासौ अतुला च सारा० 'कर्मधारयः', सारातुला आभा यस्य स सारा० 'बहुव्रीहिः', तं सारा०। न विद्यते मलो यस्यां सा अमला 'बहुव्रीहिः'। यतिरेव मा यति० 'कर्मधारयः', यतिमया नवीनः यति० 'तत्पुरुषः'। अमला आयतिर्यस्य तद् अमला० 'बहुव्रीहिः', तद् अमला०॥

४५—भ्रमणेन आर्जितानि भ्रम० 'तत्पुरुषः'। पर्जन्याश्च दानवाश्च पर्जन्य० 'इतरेतरद्वन्द्वः', सुष्ठु पूज्यः सुपूज्यः 'प्रादि'समासः, पर्जन्यदानवानां सुपूज्यः पर्जन्य० 'तत्पुरुषः', तत्सं० पर्जन्य०। सुष्ठु तानवानि सुता० 'प्रादि'समासः, तानि सुता०। तव नाम त्वन्नाम 'तत्पुरुषः'। पर्जन्यवद् दानं यस्य स पर्जन्य० 'बहुव्रीहिः', तत्सं० पर्जन्य०। वसुपूज्यस्य सुतः वसु० 'तत्पुरुषः', तत्सं० वसु०। न नवानि अनवानि 'नञ्तत्पुरुषः'॥

४६—ध्यानस्य अन्तरं ध्याना० 'तत्पुरुषः', तस्मिन् ध्याना०। मरणं ददातीति मरणदः 'उपपद'समासः, मरणदश्चासौ अमितश्च मरण० 'कर्मधारयः' मरणदामितश्चासौ मोहश्च मरण० 'कर्मधारयः', मरणदामितमोहस्य नाशो यस्याः सा मरण० 'बहुव्रीहिः', तां मरण०। दत्तं ईहितं यया सा दत्ते० 'बहुव्रीहिः', तां दत्ते०। उपकारस्य कारिणी उप० 'तत्पुरुषः', उपकारकारिणी वाग् यस्याः सा उप० 'बहुव्रीहिः', तां उप०। यमश्च आमश्च रणश्च यम० 'इतरेतरद्वन्द्वः', यमामरणान् घ्नतीति यमा० 'उपपद'समासः, तां यमा०। मोहनस्य आशा मोह० 'तत्पुरुषः', इता मोहनाशा यया सा इत० 'बहुव्रीहिः', तां इत०॥

४७—शास्त्राणां विद्या शास्त्र० 'तत्पुरुषः', शास्त्रविद्यायाः तरः शास्त्र० 'तत्पुरुषः', तत् शास्त्र० । भवं तुदतीति भव० 'उपपद'समासः, तद् भव० । सर्वे च ते भावाश्च सर्व० 'कर्मधारयः', सर्वभावान् वित्ते इति सर्व० 'उपपद'समासः, तत्सं० सर्व० । रोग एव विभवः रोग० 'कर्मधारयः', यातो रोगविभवो यस्मात् तद् यात० 'बहुव्रीहिः', तद् यात० । दितं आरं येन तद् दिता० 'बहुव्रीहिः', तद् दिता० ॥

४८—यतीनां गणः यति० 'तत्पुरुषः' । चण्डा चासौ ईतिश्च चण्डेतिः 'कर्मधारयः', भिन्ना चण्डेतिर्येन स भिन्न० 'बहुव्रीहिः' । अमला कला यस्याः सा अमल० 'बहुव्रीहिः', तत्सं० अमल० । वरा शोभा यस्याः सा वर० 'बहुव्रीहिः', वरशोभा नाभिर्यस्याः सा वर० 'बहुव्रीहिः', तत्सं० वर० । अतिशयेन कोमलं अति० 'प्रादि'समासः, अतिकोमलं च तत् कलेवरं च अति० 'कर्मधारयः', अतिकोमलकलेवरस्य शोभना आभा यस्याः सा अति० 'बहुव्रीहिः', तत्सं० अति० ॥

४९—उपान्ते समेताः उपा० 'तत्पुरुषः', देवानां देवाः देव० 'तत्पुरुषः', उपान्तसमेता देवदेवा यस्मिन् तद् उपा० 'बहुव्रीहिः', तस्मिन् उपा० । कमलेन कमलया वा सहितः सकमलः 'बहुव्रीहिः', तं सकमलम् । विशिष्टा भा यस्य तद् वि० 'उपपद'समासः, तस्मिन् वि० । जिनेषु वरः जिन० 'तत्पुरुषः', तं जिन० । जनानां ओघः जनौघः 'तत्पुरुषः' । देवैः ईहितः देवे० 'तत्पुरुषः', तं देवे० । विगतो मलो यस्मात् तद् विमलं 'बहुव्रीहिः', तद् विमलम् । विशेषेण भासि विभासि 'प्रादि'समासः, तद् विभासि ॥

५०—नियोगस्य आयः नियो० 'तत्पुरुषः', तस्मिन् नियो० । अनर्थं ददातीति अन० 'उपपद'समासः, तद् अन० । रतिश्च प्रियं च रति० 'इतरेतरद्वन्द्वः' रतिप्रिये ददतीति रति० 'उपपद'समासः, भविनां रतिप्रियदाः भवि० 'तत्पुरुषः' । तीर्थस्य अधिपाः तीर्था० 'तत्पुरुषः' । वरश्चासौ दमश्च वर० 'कर्मधारयः', तं वर० । न विद्यतेऽर्थो येषां तेऽनर्थाः 'बहुव्रीहिः' । रतेः प्रियः रति० 'तत्पुरुषः', विशिष्टः रतिप्रियः विरति० 'प्रादि'-समासः, दम्भश्च विरतिप्रियश्च दम्भ० 'इतरेतरद्वन्द्वः', अनर्थानां दम्भविरतिप्रियौ अनर्थ० 'तत्पुरुषः', अनर्थदम्भविरतिप्रियौ घ्नन्तीति अनर्थ० 'उपपद'समासः । नदीनां इनाः नदीनाः 'तत्पुरुषः' ॥

५१—भवं बिभ्रतीति भव० 'उपपद'समासः, तेषां भव० । सिद्धिरेव सौधं सिद्धि० 'कर्मधारयः', तत् सिद्धि० । अन्तरश्च आमश्च अन्त० 'कर्मधारयः', सिद्धः अन्तरामो येन स सिद्ध० 'बहुव्रीहिः', तत्सं० सिद्धा० । नय एव मा नयमा 'कर्मधारयः', नयमायां न विद्यते लयो येषां ते नय० 'बहुव्रीहिः', तेषां नय० । नयाश्च मानं च यमाश्च नय० 'इतरे-

तरद्वन्द्वः ', रामाश्च ते नयमानयमाश्च राम० ' कर्मधारयः ', रामनयमानयमानां आलयाः राम० ' तत्पुरुषः ', तेषां राम० ॥

५२—रागेण सहिता सरागा ' बहुव्रीहिः ' । सुष्ठु प्रभा यस्याः सा सु० ' बहुव्रीहिः' ॥

५३—तमसः तनुता तमस्त० ' तत्पुरुषः ', तां तमस्त० । अन्तस्य मा अन्तमा ' तत्पुरुषः ', अन्तमायाः आयः अन्त० ' तत्पुरुषः ', न विद्यते अन्तमाऽऽयो यस्य सः अनन्त० ' बहुव्रीहिः ' । परे च मोहश्च मलश्च पर० ' इतरेतरद्वन्द्वः ', न समाः असमाः ' नञ्तत्पुरुषः ', असमा इताः परमोहमला यस्मात् सः असमे० ' बहुव्रीहिः ' । न समेतः अस० ' नञ्तत्पुरुषः', मायया असमेतः मायाऽस० ' तत्पुरुषः ', तत्सं० मायाऽस० । परम ऊहो यस्य स पर० ' बहुव्रीहिः ', तं पर० । न लोभवान् अलोभवान् ' नञ्तत्पुरुषः ', तं अलोभ० ॥

५४—केन आमोदिताः कामो० ' तत्पुरुषः ', अवनिः धनं येषां ते अवनि० ' बहुव्रीहिः ' कामोदिताश्च ते अवनिधनाश्च कामो० ' कर्मधारयः ', कामोदितावनिधनैः आहृतः कामो० ' तत्पुरुषः ', तत्सं० कामो० । अवन्यां वरः अवनि० ' तत्पुरुषः ' । तीर्थं पान्तीति तीर्थ० ' उपपद 'समासः, तेषां तीर्थ० । कामं उदितः कामो० ' तत्पुरुषः ', तत्सं० कामो० । मानस्य सेना मान० ' तत्पुरुषः ', ऋता मानसेना यस्मात् स ऋत० ' बहुव्रीहिः ' ॥

५५—तत्त्वेन सहितः सत० ' बहुव्रीहिः ', तत्सं० सत० । न विद्यते अन्या यस्याः सा अन० ' बहुव्रीहिः ', तां अन० । ऊहानां सदनं ऊह० ' तत्पुरुषः ' । ततश्चासौ मोदश्च तत० ' कर्मधारयः ', ततमोदस्य मारो यस्मात् तत् तत० ' बहुव्रीहिः ' । चिन्तितश्चासौ अर्थश्च चिन्ति० ' कर्मधारयः ', चिन्तितार्थस्य जनकः चिन्ति० ' तत्पुरुषः' । यामानां आगमनं यस्मात् स यामा० ' बहुव्रीहिः ' । हसच्च अनन्तं च हसद० ' कर्मधारयः ', हसदनन्तं च तमश्च हसद० ' कर्मधारयः ', हसदनन्ततमो ददातीति हसद० ' उपपद 'समासः, तत् हसद० ॥

५६—उदाराश्च ते गुणाश्च उदार० ' कर्मधारयः ', तैः उदार० । रङ्गे मनो यस्याः सा रङ्ग० ' बहुव्रीहिः ' । अघं च मानश्च अघ० ' इतरेतरद्वन्द्वः ' अघमानयोः मतिः अघ० ' तत्पुरुषः ', अस्ता अघमानमतिर्यया सा अस्ता० ' बहुव्रीहिः ' । न विद्यते आदरो यस्मिन् सः अना० ' बहुव्रीहिः ', तेन अना० ॥

५७—सन् धर्मो यस्य स सद्धर्मः ' बहुव्रीहिः ', तत्सं० सद्धर्म ! । विमुक्ता माया येन स विमुक्त० ' बहुव्रीहिः ', तस्मै विमुक्त० । तनोः भवतीति तनु० ' उपपद 'समासः, तस्मै तनु० । धराया ईशः धरेशः ' तत्पुरुषः ', धरेशश्चासौ भानुश्च धरेश० ' कर्मधारयः ', तस्य धरेश० । पवित्रा चासौ मा च पवित्र० ' कर्मधारयः ', पवित्रमाया आयो यस्यां सा पवित्र०

'बहुव्रीहिः', पवित्रमाऽऽयया आयतिर्यस्य स पवित्र० 'बहुव्रीहिः', तत्सं० पवित्र० । न तनुः अतनुः 'नञ्तत्पुरुषः', अतनुश्चासौ भवश्च अतनु० 'कर्मधारयः', तस्मै अतनु० । धरेशवद् भानुर्यस्य स धरेश० 'बहुव्रीहिः', तस्य धरेश० ॥

५८—दम एव हव्यभुग् दम० 'बहुव्रीहिः', तेन दम० । जिनानां आली जिना० 'तत्पुरुषः' । रागश्च मरश्च राग० 'इतरेतरद्वन्द्वः', सम्पन्नौ रागमरौ यस्मात् स सम्पन्न० 'बहुव्रीहिः', सम्पन्नरागमरश्चासौ मानश्च सम्पन्न० 'कर्मधारयः', सम्पन्नरागमरमान एव वन्यः सम्पन्न० 'कर्मधारयः', ताः सम्पन्न० । रदानां इव आभा यासां ताः रदा० 'बहुव्रीहिः', ताः रदा० । सती सम्पद् यस्याः सा सत्स० 'बहुव्रीहिः' । नरा एव अगमाः नरा० 'कर्मधारयः', नरागमानां रमा नरा० 'तत्पुरुषः', नीरं ददातीति नीरदः, नवश्चासौ नीरदश्च नव० 'कर्मधारयः,' नवनीरद इव आभा यस्याः सा नव० 'बहुव्रीहिः', नरागमरमायां नवनीरदाभा नरा० 'तत्पुरुषः' ॥

५९—सन्तश्च ते कामाश्च सत्का० 'कर्मधारयः', सत्कामानां सङ्गमः सत्का० 'तत्पुरुषः', रसायां जायते इति रसाजः 'उपपद'समासः, सत्कामसङ्गम एव रसाजः सत्का० 'कर्मधारयः', रसस्य उपमानं रसो० 'तत्पुरुषः', सत्कामसङ्गमरसाजे रसोपमानं यस्याः सा सत्का० । जिनानां इन्द्रः जिने० 'तत्पुरुषः', जिनेन्द्रस्य सत्का जिनेन्द्र० 'तत्पुरुषः' । आमस्य सङ्गः आम० 'तत्पुरुषः', तं आम० । न विद्यते रसो यस्याः सा अरसा 'बहुव्रीहिः' । अपगतो मानो यस्याः सा अप० 'बहुव्रीहिः' ॥

६०—कवीनां कोटिः कवि० 'तत्पुरुषः', कविकोटया काम्या कवि० 'तत्पुरुषः' तां कवि० । प्रकृष्टा ज्ञप्तिः प्रज्ञप्तिः, कामिता चासौ रसा च कामित० 'कर्मधारयः', प्रज्ञप्तेः कामितरसा प्रज्ञप्ति० 'तत्पुरुषः', तां प्रज्ञप्ति० । अमरेषु उचिता अमरो० 'तत्पुरुषः' । दुष्टाश्च ते दोषाश्च दुष्ट० 'कर्मधारयः', तान् दुष्ट० । न मितः अमितः 'नञ्तत्पुरुषः', अमितो रसो यस्याः सा अमित० 'बहुव्रीहिः' । रोचित आयो यस्याः सा रोचि० 'बहुव्रीहिः' ॥

६१—शान्तिश्चासौ जिनश्च शान्ति० 'कर्मधारयः', तं शान्ति० । इन्द्राणां ततिः इन्द्र० 'तत्पुरुषः' । श्रिया युक्तं जातरूपं श्रीजात० 'मध्यमपदलोपी' समासः, श्रीजातरूपमिव तनुः श्रीजात० 'कर्मधारयः', कान्तश्चासौ रसश्च कान्त० 'कर्मधारयः', श्रीजातरूपतनौ कान्तरसः श्रीजात० 'तत्पुरुषः', श्रीजातरूपतनुकान्तरसेन अभिरामः श्रीजात० 'तत्पुरुषः', तं श्रीजात० । श्रीजातस्य रूपं श्रीजात० 'तत्पुरुषः', नुन्नं श्रीजातरूपं येन स नुन्न० 'बहुव्रीहिः', तत्सं० नुन्न० । कान्ता रसा यासां ताः कान्त० 'बहुव्रीहिः', ताभिः कान्तं० ॥

६२—अर्चितौ पदौ यस्याः सा अर्चित० 'बहुव्रीहिः'। मन्दाराणां वारः मन्दार० 'तत्पुरुषः', मन्दारवारश्च मणयश्च मन्दार० 'इतरेतरद्वन्द्वः', मन्दारवारमणिभिः मालितं मन्दार० 'तत्पुरुषः', मन्दारवारमणिमालितं मस्तकं येषां ते मन्दार० 'बहुव्रीहिः', तेषां मन्दार०। जिनेषु राजानः जिन० 'तत्पुरुषः', जिनराजानां माला जिन० 'तत्पुरुषः'। न मन्दः अम० 'नञ्तत्पुरुषः', अमन्द आरवो यस्याः सा अमन्दा० 'बहुव्रीहिः'। अणिम्नां आलिः अणि० 'तत्पुरुषः', अणिमाल्याः ता यस्मिन् तद् अणि० 'बहुव्रीहिः', तद् अणि०। अस्तं कं येषां ते अस्त० 'बहुव्रीहिः', तेषां अस्त०॥

६३—गोस्तन्याः मधुरता गोस्तनी० 'तत्पुरुषः', तां गोस्तनी०। हानिं छिन्ते इति हानिच्छिद् 'उपपद'समासः। नवश्चासौ रागश्च नव० 'कर्मधारयः', महान्तश्च ते अरयश्च महा० 'कर्मधारयः', आजिश्च नवरागश्च महारयश्च आजि० 'इतरेतरद्वन्द्वः', आजिनवरागमहारीणां वारः आजि० 'तत्पुरुषः', नाशित आजिनवरागमहारिवारो येन स नाशित० 'बहुव्रीहिः', तत्सं० नाशिता०। आधिरेव शुचिः आधि० 'कर्मधारयः', तस्यां आधि०। मधुत्वेन च्छिन्ना मधु० 'तत्पुरुषः'। जिनेषु वरा जिन० 'तत्पुरुषः', जिनवराणां आगमः जिन० 'तत्पुरुषः', तत्सं० जिन०। हारि च तद् वाः हारि० 'कर्मधारयः', तस्य हारि०॥

६४—अचिरायाः अपत्यं पुमान् आचिरेयः, श्रिया युक्तः आचिरेयः श्रीआचि० 'मध्यमपदलोपी'समासः, श्रीआचिरेयस्य चरणौ श्रीआ० 'तत्पुरुषः', श्रीआचिरेयचरणयोः अन्तिकं श्रीआ० 'तत्पुरुषः', श्रीआचिरेयचरणान्तिके सक्तं श्रीआ० 'तत्पुरुषः', श्रीआचिरेयचरणान्तिकसक्तं चित्तं यस्याः सा श्रीआ० 'बहुव्रीहिः'। रसनेन रोचितं रसन० 'तत्पुरुषः', रसनरोचितं च तद् देहं च रसन० 'कर्मधारयः', रसनरोचितदेहेन कान्ता रसन० 'तत्पुरुषः'। निर्गतो रसो येभ्यस्ते नीरसाः 'बहुव्रीहिः', नीरसाश्च ते नराश्च नीरस० 'कर्मधारयः', उचितं ददातीति उचितदा 'उपपद'समासः, नीरसनराणां उचितदा नीरस० 'तत्पुरुषः'॥

६५—कुन्थुश्चासौ नाथश्च कुन्थु० 'कर्मधारयः', तत्सं० कुन्थु०। शमथस्य अवसथः शमथा० 'तत्पुरुषः'। प्रकृष्टं च तत् स्थानं च प्रकृष्ट० 'कर्मधारयः', तत् प्रकृष्ट०। अरीणां राशिः अरि० 'तत्पुरुषः', नवश्चासौ अरिराशिश्च नवारि० 'कर्मधारयः', मोह एव नवारिराशिः मोह० 'कर्मधारयः', तस्य मोह०। अम्बुनाथस्य तुलना अम्बु० 'तत्पुरुषः', तां अम्बु०। न अल्पा अन० 'नञ्तत्पुरुषः', अनल्पा चासौ आस्था च अन० 'कर्मधारयः', आनन्द एव मा आन० 'कर्मधारयः', अनल्पास्थायाः आनन्दमा अन० 'तत्पुरुषः', अनल्पास्थाऽऽनन्दमायाः आयो यस्मात् सः अन० 'बहुव्रीहिः', तत्सं० अन०। वारीणां राशिः

वारि० 'तत्पुरुषः', मोहनश्चासौ वारिराशिश्च मोहन० 'कर्मधारयः', नव एव मोहनवारिराशिः नव० 'कर्मधारयः', तस्य नव० ॥

६६—जिनानां चक्रवालं जिन० 'तत्पुरुषः', तत् जिन० । आनन्दस्य दानं येषां ते आनन्द० 'बहुव्रीहिः', आनन्ददानैः महितं आनन्द० 'तत्पुरुषः', तद् आनन्द० । नरकस्य अन्तः नरका० 'तत्पुरुषः', नरकान्तं करोतीति नरका० 'उपपद'समासः, तत् नरका० । हारिणो गुणा यस्य तत् हारि० 'बहुव्रीहिः', तत् हारि० । नराणां कान्तं नर० 'तत्पुरुषः', नरकान्तं करोतीति नर० 'उपपद'समासः, तत् नर० ॥

६७—जिनानां पतिः जिन० 'तत्पुरुषः', तस्य जिन० । भ्राजिष्णुर्मा यस्याः सा भ्राजि० 'बहुव्रीहिः' । नराणां हिता नर० 'तत्पुरुषः' । न कलिता अक० 'नञ्तत्पुरुषः' । सुधा च सुधाभश्च अभ्राणि च सुधा० 'इतरेतरद्वन्द्वः', धवलिम्ना अस्तानि सुधासुधाभाभ्राणि यया सा धवलिमा० 'बहुव्रीहिः' । न जिष्णुः अजि० 'नञ्तत्पुरुषः', अजिष्णुश्चासौ मानश्च अजिष्णु० 'कर्मधारयः', अजिष्णुमानेन रहिता अजिष्णु० 'तत्पुरुषः' । कलिश्च तापश्च कलि-तापौ 'इतरेतरद्वन्द्वः', कलितापौ करोतीति कलि० 'उपपद'समासः, तैः कलि० ॥

६८—जिनानां राजा जिन० 'तत्पुरुषः', पादयोः द्वन्द्वं पाद० 'तत्पुरुषः', जिन-राजस्य पादद्वन्द्वं जिन० 'तत्पुरुषः', तत् जिन० । विभायाः आकरः विभा० 'तत्पुरुषः', शययोः विभाऽऽकरः शय० 'तत्पुरुषः', शयविभाऽऽकरेण राजमाना शय० 'तत्पुरुषः' । श्रिया युक्ता बला श्री० 'मध्यमपदलोपी' समासः, तत्सं० श्री० । वरं बलं यस्याः सा वर० 'बहुव्रीहिः', तत्सं० वर० । समश्चासौ सङ्कश्च सम० 'कर्मधारयः', तस्य सम० । विभाकरश्च राजा च विभा० 'इतरेतरद्वन्द्वः', विभाकरराजयोरिव मानं यस्याः सा विभा० 'बहुव्रीहिः' ॥

६९—सुराणा आलिः सुरा० 'तत्पुरुषः' । अग्रा सेवा यस्य तत् 'बहुव्रीहिः' तस्मिन् अग्र० । शोभनं च तद् दर्शनं च सुद० 'कर्मधारयः', सुदर्शनं धरतीति सुद० 'उपपद'-समासः, तस्मिन् सुद० । न विद्यते शमनं यस्य सः अश० 'बहुव्रीहिः', तं अश० । शोभनं दर्शनं यस्य स सुद०, धराया ईशः धरेशः, सुदर्शनश्चासौ धरेशश्च सुद० 'कर्मधारयः', तं सुद० । अन्तश्च वामा च अन्त० 'इतरेतरद्वन्द्वः', न विद्येते अन्तवामे यस्य सः अनन्त० 'बहुव्रीहिः', तं अनन्त० ॥

७०—सर्वज्ञानां संहतिः सर्वज्ञ० 'तत्पुरुषः' । भवश्च अरयश्च जनिश्च शापश्च भवारि० 'इतरेतरद्वन्द्वः', भवारिजनिशापैः तिरोहिता भवारि० 'तत्पुरुषः', भवारिजनिशापतिरोहिता श्रीर्यस्याः सा भवा० 'बहुव्रीहिः' । कृता धीर्यैः ते कृत० 'बहुव्रीहिः', तेषां कृत० । आरम्भ

एव वारिजं आर० 'कर्मधारयः', निशायाः पतिः निशा० 'तत्पुरुषः', आरम्भवारिजे निशापतिः आरम्भ० 'तत्पुरुषः', आरम्भवारिजनिशापतिवद् रोहिता आरम्भ० 'कर्मधारयः' आरम्भवारिजनिशापतिरोहिता श्रीर्यस्याः सा आरम्भ० 'बहुव्रीहिः' ॥

७१—गुणानां गणाः गुण० 'तत्पुरुषः', तान् गुण० । आभया सहिता साभा 'बहुव्रीहिः' । रतेः ईशः रतीशः 'तत्पुरुषः', तं रती० । भवश्च तोदश्च माया च भव० 'इतरेतरद्वन्द्वः', ताः भव० । ज्ञानमेव श्रीः ज्ञान० 'कर्मधारयः', तस्यै ज्ञान० । तस्य पठनं तत्प० 'तत्पुरुषः', तत्पठने उद्यताः तत्प० 'तत्पुरुषः' तेषां तत्प० । दमस्य आयो यस्याः सा दमाया 'बहुव्रीहिः' ॥

७२—चञ्चती च ते विलोचने च चञ्च० 'कर्मधारयः', मरीचीनां चयः मरीचि० 'तत्पुरुषः', चञ्चद्विलोचनयोः मरीचिचयः चञ्च० 'तत्पुरुषः', चञ्चद्विलोचनमरीचिचयेन अभिभूता चञ्च० 'तत्पुरुषः', सारङ्गस्य ता सार० 'तत्पुरुषः', चञ्चद्विलोचनमरीचिचयाभिभूता सारङ्गता यया सा चञ्च० 'बहुव्रीहिः' । स्फटिकवद् रोचितं स्फटिक० 'कर्मधारयः' स्फटिकरोचितं च तद् भालं च स्फटिक० 'कर्मधारयः', स्फटिकरोचितभालेन कान्तो स्फटिक० 'तत्पुरुषः' । स्फाटिनः कराः स्फटि० 'तत्पुरुषः', स्फटिकरवद् उचिता स्फटि० 'कर्मधारयः' स्फटिकरोचिता भा येषां ते स्फटि० 'बहुव्रीहिः', अलकान्तां अन्ताः अलका० 'तत्पुरुषः', स्फटिकरोचितभा अलकान्ता यस्याः सा स्फटि० 'बहुव्रीहिः' ॥

७३—मल्लिश्चासौ नाथश्च मल्लि० कर्मधारयः', श्रिया युक्तः मल्लिनाथः श्रीमल्लि० 'मध्यमपदलोपी 'समासः, तत्सं० श्रीमल्लि० । शमथ एव द्रुमः शमथ० 'कर्मधारयः', शमथद्रुमस्य सेकः शमथ० 'तत्पुरुषः', शमथद्रुमसेके पाथः शमथ० 'तत्पुरुषः' । कान्तश्चासौ प्रियङ्गुश्च कान्त० 'कर्मधारयः', कान्तप्रियङ्गोः रुचिः कान्त० 'तत्पुरुषः', कान्तप्रियङ्गुरुचिवद् रोचितं कान्त० 'मध्यमपदलोपी 'समासः, कायस्य तेजः काय० 'तत्पुरुषः', कान्तप्रियङ्गुरुचिरोचितं कायतेजो यस्य स कान्त० 'बहुव्रीहिः', तत्सं० कान्त० । पाद एव अब्जं पादा० 'कर्मधारयः' । मदनस्य अर्तिः मद० 'तत्पुरुषः', मदनार्तौ मधुः मद० 'तत्पुरुषः', तस्मिन् मद० । विमुक्तं अप्रियं येन स विमुक्ता० 'बहुव्रीहिः', तत्सं० विमुक्ता० । चिरं च तद् उचितं च चिरो० 'कर्मधारयः', चिरोचितं च तत् कं च चिरो० 'कर्मधारयः', तस्मै चिरो० । न जायते इति अजः, तत्सं० अज ! ॥

७४—इन्दुकान्तवद् अच्छा इन्दु० 'कर्मधारयः' । न विद्यते सङ्गमो येषां ते अस० 'बहुव्रीहिः', तेषां अस० । प्रकाश एव च्छाया प्रकाश० 'कर्मधारयः', प्रकाशच्छायाया

विलम्बः प्रकाश० 'तत्पुरुषः', कृता प्रकाशच्छायाविलम्बेन यतिः येन तत् कृत० 'बहुव्रीहिः', तत् कृत० ॥

७५—मोहश्च अनश्च मोहानौ 'इतरेतरद्वन्द्वः', मोहानयोः आयः मोहा० 'तत्पुरुषः', अस्तः मोहानायो यस्याः सा अस्त० 'बहुव्रीहिः'। अम एव तामरसं अम० 'कर्मधारयः', तद् अम०। वाग् एव चन्द्रः वाक्च० 'कर्मधारयः', वाक्चन्द्रस्य रुक् वाक्च० 'तत्पुरुषः'। तमसो भरः तमो० 'तत्पुरुषः', तं तमो०। आयासश्च मानश्च ममता च मरश्च आयास० 'इतरेतरद्वन्द्वः', आयासमानममतामराणां संस्तवः आयास० 'तत्पुरुषः', न विद्यते आयासमानममतामरसंस्तवो येषा ते अनायास० 'बहुव्रीहिः', तेषां अनायास० ॥

७६—जैनं च तत् शासनं च जैन० 'कर्मधारयः', श्रिया युक्तं जैनशासनं श्रीजैन० 'मध्यमपदलोपी' समासः, श्रीजैनशासनस्य हिता श्रीजैन० 'तत्पुरुषः'। अहितानां आली अहिताली 'तत्पुरुषः', निखिला चासौ अहिताली च निखिला० 'कर्मधारयः', निखिलाहितालयाः संभिद् निखिला० 'तत्पुरुषः'। अमराणां सभा अमर० 'तत्पुरुषः', नता अमरसभा यस्याः सा नता० 'बहुव्रीहिः'। सुरैः भासमाना सुर० 'तत्पुरुषः'। धरणस्य प्रिया धरण० 'तत्पुरुषः'। संभिन्नं च तत् तामरसं च संभिन्न० 'कर्मधारयः', संभिन्नतामरसवद् भासुरा संभिन्न० 'कर्मधारयः', संभिन्नतामरसभासुरा भा यस्याः सा संभिन्न० 'बहुव्रीहिः'॥

७७—महान्तश्च ते मुनयश्च महा० 'कर्मधारयः', विस्मिता महामुनयो येन तद् विस्मित० 'बहुव्रीहिः', तद् विस्मित०। निर्गता माया यस्मात् स निर्मायः 'बहुव्रीहिः', तत्सं० निर्माय!। विस्मितं महो यस्य स विस्मित० 'बहुव्रीहिः' ॥

७८—जिनान् पान्तीति जिनपाः 'उपपद'समासः। कान्तायाः रसः कान्ता० 'तत्पुरुषः', तं कान्ता०। गत्या पराजिताः गति० 'तत्पुरुषः', गतिपराजिता राजहंसा यैस्ते गति० 'बहुव्रीहिः'। कीर्तिश्च कं च कीर्तिके 'इतरेतरद्वन्द्वः', शोभने कीर्तिके यस्याः सा सुकी० 'बहुव्रीहिः', तां सुकी०। तारा चासौ सङ्गतिश्च तार० 'कर्मधारयः', तारसङ्गत्या पराः तार० 'तत्पुरुषः'। राजा च हंसश्च राज० 'इतरेतरद्वन्द्वः', जितौ राजहंसौ यैस्ते जित० 'बहुव्रीहिः' ॥

७९—दुःखेन दान्ताः दुर्दा०, दुर्दान्ताश्च ते वादिनश्च दुर्दा० 'कर्मधारयः', दुर्दान्तवादिना कुमतं दुर्दा० 'तत्पुरुषः', दुर्दान्तवादिकुमतमेव त्रिपुरः दुर्दा० 'कर्मधारयः', दुर्दान्तवादिकुमतत्रिपुरस्य अभिघातः दुर्दा० 'तत्पुरुषः', तस्मिन् दुर्दा०। कामस्य अरिः कामारिः 'तत्पुरुषः', तं कामा०। सर्वज्ञ एव शीतरुचिः सर्वज्ञ० 'कर्मधारयः', तेन सर्वज्ञ०। कामश्च अरयश्च मानश्च ममता च कामा० 'इतरेतरद्वन्द्वः', निरस्ताः कामारिमानममताः येन तत् निरस्त० 'बहुव्रीहिः', तत् निरस्त०। पृथुलः क्षणो येन तद् पृथुल० 'बहुव्रीहिः', तेन पृथुल० ॥

८०—दुष्कृतस्य कर्माणि दुष्कृत० ‘ तत्पुरुषः ’, दुष्कृतकर्मभिः मुक्ता दुष्कृत० ‘ तत्पुरुषः ’। अनश्च अलीकं च अना० ‘ इतरेतरद्वन्द्वः ’, अनालीकयोः भञ्जनं अना० ‘ तत्पुरुषः ’, अनालीकभञ्जने परा अना० ‘ तत्पुरुषः ’। अराला बाला यस्याः सा अराल० ‘ बहुव्रीहिः ’। नालीकवद् भा यस्य तद् नालीक० ‘ बहुव्रीहिः ’, तद् नालीक०। मरालस्य बाला मराल० ‘ तत्पुरुषः ’, परास्ता मरालबाला यया सा परास्त० ‘ बहुव्रीहिः ’॥

८१—देवानां इन्द्रः देवे० ‘ तत्पुरुषः ’, देवेन्द्राणां वृन्दं देवे० ‘ तत्पुरुषः ’, देवेन्द्रवृन्दैः परिसेवितः देवे० ‘ तत्पुरुषः ’, तत्सं० देवे०। त्यागेन सहिता सत्यागा ‘ बहुव्रीहिः ’, सत्यागा चासौ मा च सत्या० ‘ कर्मधारयः ’, सत्त्वेभ्यो दत्ता सत्य० ‘ तत्पुरुषः ’, सत्त्वदत्ता सत्यागमा येन स सत्त्व० ‘ बहुव्रीहिः ’। मदन एव मेघः मदन० ‘कर्मधारयः’, महांश्चासौ अनिलश्च महा० ‘ कर्मधारयः ’, महानिलस्येव आभा यस्य स महा० ‘ बहुव्रीहिः ’, मदनमेघे महानिलाभः मदन० ‘ तत्पुरुषः ’,। रतेः नाथः रति० ‘ तत्पुरुषः ’, रतिनाथस्य सरूपं रति० ‘ तत्पुरुषः ’, रतिनाथसरूपं रूपं यस्य स रति० ‘ बहुव्रीहिः ’। सत्य आगमो यस्य स सत्या० ‘बहुव्रीहिः’। न विद्यते मदो यस्य सः अमदः ‘ बहुव्रीहिः ’, तत्सं० अमद !। हानेर्लाभः हानि० ‘तत्पुरुषः’, न विद्यते हानेर्लाभो यस्य सः अहानि० ‘ बहुव्रीहिः ’॥

८२—पापानां प्रवृत्तयः पाप० ‘ तत्पुरुषः ’, तासु पाप०। न सत्याः अस० ‘ नञ्तत्पुरुषः ’, तासु अस०। शिवस्य सङ्गमनं शिव० ‘तत्पुरुषः’, तस्मात् शिव०। न विद्यते दानं यस्याः सा अदाना ‘ बहुव्रीहिः ’। जिनेषु इन्द्राः जिने० ‘ तत्पुरुषः ’, जिनेन्द्राणां इयं जैने०, जैनेन्द्रा चासौ पङ्क्तिश्च जैने० ‘ कर्मधारयः ’। मदीयं च तत् चित्तं च मदीय० ‘ कर्मधारयः ’, तस्मिन् मदीय०। शिवस्य सङ्गः शिव० ‘ तत्पुरुषः ’, शिवसङ्गे मनो यस्याः सा शिव० ‘ बहुव्रीहिः ’॥

८३—महान्तश्च ते अरयश्च महा० ‘ कर्मधारयः ’, माया च महारयश्च मदनश्च माया० ‘ इतरेतरद्वन्द्वः ’, अस्ता मायामहारिमदना येन तद् अस्त० ‘ बहुव्रीहिः ’। दानस्य वारि दान० ‘ तत्पुरुषः ’, दितं दानवारि यस्य तद् दित० ‘ बहुव्रीहिः ’, तद् दित० आयामेन हारि आयाम० ‘ तत्पुरुषः ’। दानवानां अरयः दानवा० ‘ तत्पुरुषः ’, मदेन नन्दिता मद० ‘ तत्पुरुषः ’, मदनन्दिता दानवारयो येन तद् मद० ‘ बहुव्रीहिः ’॥

८४—अकिञ्चनाश्च ते जनाश्च अकिञ्चन० ‘ कर्मधारयः ’, तान् अकिञ्चन०। विशदं मानं ययोः ते विशदमाने ‘ कर्मधारयः ’, गदा च अक्षमाला च गदा० ‘ इतरेतरद्वन्द्वः ’, विशदमाने गदाऽक्षमाले यस्याः सा विशद० ‘ बहुव्रीहिः ’। प्रथितः प्रभावो यस्याः सा प्रथित० ‘ बहुव्रीहिः ’। विशन्ती अमा येषु ते विश० ‘ बहुव्रीहिः ’ तान् विश०। न विद्यते गदो यस्याः

सा अगदा 'बहुव्रीहिः', अक्षाणां माला अक्ष० 'तत्पुरुषः', अगदा अक्षमाला यस्याः सा अगदा० 'बहुव्रीहिः' ॥

८५—रैवत आख्या यस्य स रैवत० 'बहुव्रीहिः', रैवताख्यश्चासौ गिरिश्च रैवता० 'कर्मधारयः', रैवताख्यगिरेः मूर्धा रैवता० 'तत्पुरुषः', तस्मिन् रैवता० । भोगानां राजी भोग० 'तत्पुरुषः', तां भोग० । मारस्य चयः मार० 'तत्पुरुषः', जनानां मारचयो यस्यां सा जन० 'बहुव्रीहिः', तां जन० । आन्तराश्च ते अरयश्च आन्तरा० 'कर्मधारयः', विगता आन्तरारयो यस्य स विगता० 'बहुव्रीहिः' । राजीमत्याः त्यजनं राजी० 'कर्मधारयः', तद् राजी० ॥

८६—ज्ञानस्य सारं ज्ञान० 'तत्पुरुषः', यस्य ज्ञानसारं यज्ज्ञान० 'तत्पुरुषः', यज्ज्ञानसारं एव मुकुरः यज्ज्ञान० 'कर्मधारयः', तस्मिन् यज्ज्ञान० । भावानां आलयः भावा० 'तत्पुरुषः' । श्रियां भावः श्री० 'तत्पुरुषः', श्रीभावस्य आलयः श्री० 'तत्पुरुषः' । आरस्य हितानि आर० 'तत्पुरुषः', तानि आर० ॥

८७—देहं जुषन्तीति देह० 'उपपद'समासः, अखिलाश्च ते देहजुषश्च अखिल० 'कर्मधारयः', तेषां अखिल० । समतया परः समता० 'तत्पुरुषः', तत्सं० समता० । सिद्धैः रचितः सिद्ध० 'तत्पुरुषः', तस्य सिद्ध० । उग्रं च तत् तत्त्वं च उग्र० 'कर्मधारयः', उग्रतत्त्वमेव सारो यस्याः सा उग्र० 'बहुव्रीहिः' । तापस्य रमा ताप० 'तत्पुरुषः' समा चासौ तापरमा च सम० 'कर्मधारयः', समतापरमा च रणं च सम० 'इतरेतरद्वन्द्वः', अतिक्रान्ते समतापरमारणे येन सः अति० 'बहुव्रीहिः', तस्य अति० ॥

८८—न समाः असमाः 'नञ्तत्पुरुषः', असमाश्च ता द्युतयश्च असम० 'कर्मधारयः', ताभिः असम० । तारा च विभावसुश्च तारा० 'इतरेतरद्वन्द्वः', निरस्तौ ताराविभावसू येन स निरस्त० 'बहुव्रीहिः, तं निरस्त० । महान्तश्च अरयश्च महा० 'कर्मधारयः', तोदश्च महारयश्च बन्धश्च तोद० 'इतरेतरद्वन्द्वः', न विद्यन्ते तोदमहारिबन्धाः यस्याः सा अतोद० 'बहुव्रीहिः' । अमरस्य वशा अमर० 'तत्पुरुषः' । ताराणां विभुः तारा० 'तत्पुरुषः', सार्वेषु ताराविभुः सार्व० 'तत्पुरुषः', नेमिश्चासौ सार्वताराविभुश्च नेमि० 'कर्मधारयः', तस्मिन् नेमि० । दमेन हारी दम० 'तत्पुरुषः', दमहारी बन्धो यस्याः सा दम० 'बहुव्रीहिः' ॥

८९—श्रिया युक्तः पार्श्वः श्री० 'मध्यमपदलोपी' समासः, यक्षाणां पतिः यक्ष० 'तत्पुरुषः', श्रीपार्श्वश्चासौ यक्षपतिश्च श्रीपार्श्व० 'कर्मधारयः', तेन श्रीपार्श्व० । परिसेव्यमानं पार्श्वं यस्य स परि० 'बहुव्रीहिः', तस्मिन् परि० । अमिता चासौ रसा च अमित० 'कर्मधारयः', भव एव अमितरसा भवा० 'कर्मधारयः', भवामितरसायाः दरं भवा० 'तत्पुरुषः', लाङ्ग-

लस्येव आभा यस्य स लाङ्गलाभः 'बहुव्रीहिः', भवामितरसादरे लाङ्गलाभः भवा० 'तत्पुरुषः', तस्मिन् भवा० । रागयुक्तं मनो यस्य स राग० 'बहुव्रीहिः'। दरं लुनातीति दरलं 'उपपद'समासः, दरलं च तद् अङ्गं च दर० 'कर्मधारयः', दरलाङ्गस्य लाभो यस्य स दर० 'बहुव्रीहिः', तस्मिन् दर० ॥

९०—वरं च तद् इन्द्रनीलं च वरे० 'कर्मधारयः', श्यामा च सुधाकरश्च सुवर्णं च वरेन्द्रनीलं च राजीवं च श्यामा० 'इतरेतरद्वन्द्वः', श्यामासुधाकरसुवर्णवरेन्द्रनीलराजीववद् राजिततरं श्यामा० 'कर्मधारयः' श्यामासुधाकरसुवर्णवरेन्द्रनीलराजिततरं च तद् अङ्गं च श्यामा० 'कर्मधारयः', श्यामासुधाकरसुवर्णवरेन्द्रनीलराजीवराजिततराङ्गं धरतीति श्यामा० 'उपपद'समासः। अतिशायिनी धीः अति० 'प्रादि'समासः, तां श्रे०। जिनेषु कुञ्जराः जिन० 'तत्पुरुषः', तेषां जिन०। अतिशयेन धीरा अति० 'प्रादि'समासः, धरवद् अतिधीरा धरा० 'मध्यमपदलोपी' समासः ॥

९१—जिनस्य वाग् जिन० 'तत्पुरुषः'। गहनाश्च ते अर्थाश्च गहना० 'कर्मधारयः', गहनार्थानां सार्थाः गहना० 'तत्पुरुषः', तैः गहना०। तमो हन्तीति तमोहा 'उपपद'समासः, तां तमो०। दूरे स्थिता दूर० 'तत्पुरुषः', तां दूर०। स्मृतेः पथः स्मृति० 'तत्पुरुषः', तं स्मृति०। मुक्तिरेव पुरी मुक्ति० 'कर्मधारयः', तस्याः मुक्ति०। समश्चासौ यातश्च सम० 'कर्मधारयः', समयातो मोहो यस्याः सा सम० 'बहुव्रीहिः', तां सम० ॥

९२—पादौ एव पद्मौ पाद० 'कर्मधारयः', पार्श्वस्य पादपद्मौ पार्श्व० 'तत्पुरुषः', तौ पार्श्व०। अतिशायि ईहितं अती० 'प्रादि'समासः, अतीहितं एव रसाजः अती० 'कर्मधारयः', वनस्य उपमानं यस्याः सा वनो० 'बहुव्रीहिः', अतीहितरसाजे वनोपमाना अती० 'तत्पुरुषः'। अपगतो मानो यस्याः सा अप० 'बहुव्रीहिः' ॥

९३—सिद्धार्थस्य वंशः सिद्धार्थ० 'तत्पुरुषः', सिद्धार्थवंशस्य भवनं सिद्धार्थ० 'तत्पुरुषः', तस्मिन् सिद्धार्थ०। सुराणां आली सुरा० 'तत्पुरुषः'। तमो हन्तीति तमो० 'उपपद'समासः, तं तमो०। न विद्यते करो यस्य सः अकरः 'बहुव्रीहिः', तत्सं० अकर!। आनता अरयो यस्य स आन० 'बहुव्रीहिः', तत्सं० आन०। सुमेरुवद् धीरः सुमेरु० 'मध्यमपदलोपी' समासः, तं सुमेरु०। हृदः याताः हृद्याताः 'तत्पुरुषः', मोहश्च मकरध्वजश्च मानश्च मोह० 'इतरेतरद्वन्द्वः', हृद्याताः मोहमकरध्वजमाना यस्य स हृद्यात० 'बहुव्रीहिः', तत्सं० हृद्यात० ॥

९४—पाद एव पद्मं पाद० 'कर्मधारयः', यस्य पादपद्मं यत्पाद० 'तत्पुरुषः'। भव एव अब्धिः भवा० 'कर्मधारयः', तस्मिन् भवा० । शमस्य धरी शम० 'तत्पुरुषः'। कामस्य चक्रं काम० 'तत्पुरुषः', कृतं कामचक्रं यया सा कृत० 'बहुव्रीहिः' । जिनस्य इयं जैना, जैना चासौ राजी च जैन० 'कर्मधारयः', तत्सं० जैन० । मञ्जवश्च ते शिवाश्च मञ्जु० 'कर्मधारयः', मञ्जुशिवाश्च ते द्रुमाश्च मञ्जु० 'कर्मधारयः', तेषां मञ्जु० । कामस्य चक्रं काम० 'तत्पुरुषः', अधरीकृतं कामचक्रं यया सा अधरी० 'बहुव्रीहिः' ॥

९५—न रामा अरामा 'नञ्तत्पुरुषः', न रमा अरमा 'नञ्तत्पुरुषः, अरामा चासौ अरमा च अरामा० 'कर्मधारयः', अपास्ता अरामारमा यया सा अपास्ता० । अमर्त्या चासौ मणी च अमर्त्य० 'कर्मधारयः' । अतिशयेन मता अति० 'प्रादि'समासः, अतिधियं रातीति अति० 'उपपद'समासः । श्रेयसः श्रीः श्रेयःश्रीः 'तत्पुरुषः', तां अति० । न रीणा अरीणा 'नञ्तत्पुरुषः', तां अरीणाम् ॥

९६—सम्यग् दृग् येषां ते सम्य० 'बहुव्रीहिः' तेषा सम्य० । सुखस्य करी सुख० 'तत्पुरुषः' । मदेन मत्ता मद० 'तत्पुरुषः', मदमत्ता चासौ नीलकण्ठी च मद० 'कर्मधारयः', मदमत्तनीलकण्ठीवद् रवो यस्याः सा मद० 'बहुव्रीहिः' । ततं च तत् नोदितं च तत० 'कर्मधारयः', अक्षमया सहितं साक्षमं 'बहुव्रीहिः', साक्षमं च तद् आलं च साक्षमालं 'कर्मधारयः', ततनोदितं साक्षमालं यया सा तत० 'बहुव्रीहिः' । कण्ठीरवे आसिता कण्ठी० 'तत्पुरुषः', कण्ठीरवासिता तनुर्यस्याः सा कण्ठी० 'बहुव्रीहिः', तत्सं० कण्ठी० । न दिता अदिता 'नञ्तत्पुरुषः', अदिता सा यस्याः सा अदितसा 'बहुव्रीहिः' । क्षमां लातीति क्षमाला 'उपपद'समासः ॥



क–परिशिष्टम् ।

श्रीसोमतिलकसूरीश्वरकृता

# ॥ साधारणजिनस्तुतिः ॥

( सावचूरिः )



तावत् मूलनायकस्तुतिः—

श्रीतीर्थराजः पदपद्मसेवा–हेवाकिदेवासुरकिन्नरेशः ।
गम्भीरगीस्तारतरा वरेण्य–प्रभावदाता ददतां शिवं वः ॥ १ ॥

—उपजातिः

## अवचूरिः

'श्रीतीर्थराजः' श्रिया–चतुस्त्रिंशदतिशयरूपया उपलक्षितः, तीर्थस्य–चतुर्वर्णश्रीश्रमणसङ्घादिरूपस्य राजा–स्वामी, श्रिया–ज्ञानादिरत्नत्रयरूपया उपलक्षितस्य वा तीर्थस्य राजा (श्री)तीर्थराजः। अत्र 'राजन्सखेः' (सिद्धहेम० अ० ७, पा० ३, सू० १०६) इति अटसमासान्तः, अन्त्यस्वरादिलोपे च सिद्धिः। किम्भूतः स इत्याह–पदपद्मानि अर्थात् भगवत एव पदकमलानि तेषां या सेवा–परिचर्या तस्याः हेवाकः–तच्छीलत्वात् स्वभावो येषां ते पदपद्मसेवाहेवाकिनः, देवासुरकिन्नरेशाः–ऊर्ध्वाधस्तिर्यग्लोकनिवासिजनाधिपाः, उपलक्षणत्वात् ज्योतिष्कशेषभवनपतिव्यन्तरखचरप्रभवोऽपि गृह्यन्ते, ततः पदपद्मसेवाहेवाकिनो देवासुरकिन्नरेशा यस्य स तथा। पुनः किम्भूतः? गाम्भीर्यादिगुणयुतत्वात् अनुत्ताना गीर्यस्य स तथा । तारं–(उत्कृष्टं) अपरिमितत्वात् तरो–बलं वीर्यं वा यस्य स तथा। वरेण्याः–प्रशस्यतमाः ये प्रभावाः–माहात्म्याद्यतिशयास्तान्, यद्वा वरेण्यः प्रकृष्टो यो भावः–भावनात्मकश्चित्ताभिप्रायो विभूतिरूपो वा तं ददातीत्येवंशीलस्तथा। अत एव उक्तमनेकार्थे (श्लो० ५३८–५३९)—

"भावोऽभिप्रायवस्तुनोः। स्वभावजन्मसत्तात्मक्रियालीलाविभूतिषु"

इति ॥ अत्र शीलार्थे तृन्, ईदृग्विशेषणविशिष्टः सन् तीर्थराजः किं कुरुतामित्याह–शिवं–सुखं कल्याणं मोक्षं च तन्निबन्धनसन्मार्गोपदेशनाद् वः–युष्माकं (ददताम्)। इह कथं ददतां इत्येकवचनम्? उच्यते–'ददि दाने' (सिद्ध० धातुपाठे) इति धातोः आत्मनेपदत्वात् पञ्चमी शिवि च सिद्धम्, तृतीयस्तुताव-प्येवमेवेति ॥ १ ॥ एषा मूलनायकापेक्षयोक्ता ॥

## अन्वयः

पद–पद्म–सेवा–हेवाकिन्–देव–असुर–किन्नर–ईशः गम्भीर–गीः तार–तराः वरेण्य–प्रभाव–दाता श्री–तीर्थ–राजः वः शिवं ददताम् ।

## શબ્દાર્થ

श्री=લક્ષ્મી.
तीर्थ=ચતુર્વિધ સંઘ.
राजन्=રાજા, સ્વામી.
श्रीतीर्थराज=લક્ષ્મીયુક્ત તીર્થરાજ.
पद=ચરણ, પગ.
पद्म=કમળ.
सेवा=સેવા, ભક્તિ.
हेवाकिन्=આતુર.
देव=દેવ, સુર.
असुर=અસુર.
किन्नर=કિન્નર.
ईश=સ્વામી.
पदपद्मसेवाहेवाकिदेवासुरकिन्नरेशः=જેના ચરણ-કમળની સેવા કરવાને આતુર છે સુર, અસુર અને કિન્નરના સ્વામીઓ એવા.
गम्भीर=ગંભીર.
गिर्=વાણી.
गम्भीरगीः=ગંભીર છે વાણી જેની એવા.
तार=ઉત્તમ.
तरस्=બળ.
तारतराः=ઉત્તમ છે બળ જેનું એવા.
वरेण्य=પ્રશંસા કરવા લાયક.
प्रभाव=(૧) પ્રભાવ, મહિમા; (૨) પ્રકૃષ્ટ ભાવ.
दातृ=આપનાર.
वरेण्यप्रभावदाता=પ્રશંસા કરવા લાયક પ્રભાવના દાતા.
दद्तां ( धा० दद् )=આપો.
शिवं ( मू० शिव )=મોક્ષને.
वः ( मू० युष्मद् )=તમને.

## પદ્યાર્થ

### મૂળ નાયકની સ્તુતિ—

"જેના ચરણ-કમળની સેવા કરવાને [1]સુર, [2]અસુર અને [3]કિન્નરના સ્વામીઓ આતુર છે એવા, વળી ગંભીર વાણીવાળા તેમજ અતિશય બળવાળા તેમજ વળી પ્રશંસા-પાત્ર પ્રભાવ [અથવા પ્રકૃષ્ટ ચિત્તના અભિપ્રાય]ને આપનારા એવા તથા ([4]ચોત્રીસ અતિશયરૂપી અથવા જ્ઞાન, દર્શન અને ચારિત્રરૂપી) લક્ષ્મી વડે યુક્ત એવા તીર્થરાજ (હે ભવ્યો!) તમને મોક્ષ આપો."—૧

* * * * *

अथ सर्वतीर्थङ्करानाश्रित्य ( पूर्वमेव पद्यम् )।

## अवचूरिः

श्रीतीर्थराजः-श्रीतीर्थाधिपतयः, अत्र राट्शब्दो व्यञ्जनान्तः, प्रथमान्तश्च । अर्थस्तु पूर्ववत् किन्तु शब्दान्तरवचनान्तराभ्यां शब्दवचनयोरत्र श्लेषो द्रष्टव्यः । किंविशिष्टास्ते ? 'पदपद्मसेवाहेवाकिदेवासुरकिन्नरेशः' इह ईट्शब्दो राट्शब्दवद् व्यञ्जनान्तः प्रतीतः, ततः पदपद्मसेवाहेवाकिनो देवासुरकिन्नरेशा येषां ते तथा इतीह बहुव्रीहिर्विधेयः । तथा गम्भीरा गीर्येषां ते तथा । समस्तात्रिभुवनाद्भुतानिष्प्रतिमरूपयुक्तत्वात् अतिशयेन ताराः तारतरा-मनोज्ञा इत्यर्थः, ततो गम्भीरगिरश्च ते तारतराश्चेति कर्मधारयः, यद्वा गम्भीरशब्दोऽत्र हृदयङ्गमनाऽतिस्निग्धमधुरत्वादिवचनगुणसङ्ग्राही ततो गम्भीरगिरा तारतरा गम्भीरगीस्तारतराः । तथा वरेण्याः-प्रशस्यतमाः प्रभा-भास्वद्देहद्युतिस्तया तस्यां वा अवदाताः(-विगतमलकलङ्काः), न तु धवलदेहदीधितयः, तेषां पञ्चवर्णत्वात् । तथा चोक्तम्-"प्रियङ्गुस्फटिकस्वर्ण०" । इह 'डुदांग्क् दाने' (सिद्ध० धातुपाठे) इति उभयपदत्वात् पञ्चम्यां अन्तां द्वित्वे सिद्धम् ॥१॥

---

૧-૨-૩ સુર ઊર્ધ્વ-લોકમાં, અસુર અધોલોકમાં અને કિન્નર મર્ત્ય-લોકમાં વસે છે.
૪ ચોત્રીસ અતિશયોની માહિતી માટે જુઓ અભિધાન-ચિન્તામણિના પ્રથમ કાણ્ડના ૫૭-૬૪ શ્લોકો.

### अन्वयः

पद० गम्भीर-गिर्-तारतराः वरेण्य-प्रभा-अवदाताः श्री-तीर्थ-राजः वः शिवं ददताम् ।

### શબ્દાર્થ

राज्=રાજા.
श्रीतीर्थराजः=લક્ષ્મીથી યુક્ત તીર્થંકરો.
ईश्=સ્વામી.
पदपद्म०=જેમના ચરણ-કમળની....
तार=મનોહર.
गम्भीरगीस्तारतराः= (૧) ગંભીર છે વાણી જેમની એવા તથા અત્યંત મનોહર; (૨) ગંભીર વાણી વડે અતિશય મનોહર.
प्रभा=તેજ.
अवदात=નિર્મળ.
वरेण्यप्रभावदाताः= પ્રશંસા-પાત્ર પ્રભા વડે નિર્મળ.
ददतां ( धा० दा )=આપો.

### પદ્યાર્થ

**સર્વ તીર્થંકરોની સ્તુતિ—**

"જેમના ચરણ-કમળની .... આતુર છે એવા, વળી ગંભીર વાણીવાળા તેમજ મનોહર [ અથવા ગંભીર વાણીએ કરીને મનોહર ] તથા વળી પ્રશંસા-પાત્ર પ્રભા વડે નિર્મળ એવા શ્રીતીર્થંકરો તમને સિદ્ધિ સમર્પો."—૨

* * * * *

( श्रुतज्ञानस्तुतिः प्रथमपद्यात्मिका )—

### अवचूरिः

श्रीतीर्थराजः-श्रीतीर्थाधिनाथस्य-पादारविन्दनिरन्तरपरिचर्याचतुरसुराद्यधीश्वरस्य, अत्र उभयत्रापि प्रथमास्थाने षष्ठीदानाद् विभक्तिश्लेषः । एकवचनं तु विवक्षितैकजिनापेक्षं समानगुणत्वात् जात्यपेक्षं वा, एवंभूतस्य तीर्थनाथस्य सम्बन्धिनी गम्भीरा चाऽसौ गीश्चेति विशेष्यभूता ददतां शिवं वः इति सम्बन्धः । गम्भीरत्वं च त्रिपदीरूपयाऽपि समस्तत्रिभुवनवर्त्तियथावस्थितधर्मास्तिकायादिद्रव्यषट्कप्ररूपणापरत्वात् तारतरा-उदात्तगुणयोगाद्योजनविस्तारित्वाच्च अतिशयेन तारतरा । यद्वा स्वस्वभाषात्वेन परिणामित्वात् हृदयसंशयच्छेदाच्च अतिमनोज्ञा । ननु जिनवचनस्य द्वादशाङ्गीरूपस्य पूर्वोक्तगुणाभावात् असम्भवि विशेषणमिदम्, नैवम्, यतो द्वादशाङ्गी हि त्रिपदीप्रपञ्चरूपैव, सा च भगवतां धर्मदेशनारूपा, अथवा अद्भुतप्रभावत्वात् मनोज्ञतरा, तथा वरेण्यप्रभया-विशिष्टविभया अवदाता-शुभ्रा । इह लिङ्गश्लेषः, शब्दार्थश्लेषावपि विचार्यौ ॥ ३ ॥

### अन्वयः

पद० श्री-तीर्थ-राजः तारतरा वरेण्य-प्रभा-अवदाता गम्भीरगीः वः शिवं ददताम् ।

### શબ્દાર્થ

श्रीतीर्थराजः=શ્રીતીર્થરાજની.
गम्भीरगीः=ગંભીર વાણી.
तारतरा=અત્યંત મનોહર.
अवदात=શુદ્ધ.
वरेण्यप्रभावदाता=પ્રશંસા-પાત્ર વિશિષ્ટ પ્રભા વડે શુદ્ધ.

## પદ્યાર્થ

**શ્રુતજ્ઞાનની સ્તુતિ—**

"જેના ચરણ-કમળની .... એવા શ્રીતીર્થરાજની અતિશય મનોહર તેમજ પ્રશંસાપાત્ર વિશિષ્ટ વિભા વડે શુદ્ધ એવી ગંભીર વાણી તમને મોક્ષ અર્પો."—૩

* * * * *

वैयावृत्यसुरस्तुतिः ( अत्र आद्यचरणद्वयं पूर्ववत्, तृतीयतुरीये तु यथा )–

गम्भीरगीस्तारतरा वरेण्य–प्रभावदाता ददतां शिवं वः ॥ ४ ॥

## अवचूरिः

श्रीतीर्थनाथस्य पदपद्मसेवाहेवाकिनश्च देवासुरकिन्नरेशाश्च ददतां शिवं वः इति सम्बन्धः। इहापि शिवशब्देन मोक्षव्याख्यानं न अनुपपन्नम्। यतः सम्यग्दृष्टिसुरा हि व्यामूढानां मोक्षप्राप्तिहेतुं सर्वज्ञोपज्ञतत्त्वप्रकाशनेन मोक्षं प्रयच्छन्त्येव " सम्मद्दिट्ठी देवा, दिंतु समाहिं च बोहिं च " ( वंदित्तुसंज्ञके सूत्रे गाथाङ्कः ४७ ) इति वचनात्, "भवविरहवरं देहि मे देवि! सारं"(संसारदावानलस्तुतौ श्लो० ४ ) इत्यादि वचनात्, मेतार्यादिचरित्रेषु तथा श्रूयमाणत्वात् चेत्यलं विस्तरेण। तथा गम्भीरगिरः–अतुच्छवचनाः, इदं माधुर्यादिगुणवर्यवचो वा इदं विशेषणं स्वरे सामुद्रिकवचनात् अप्रतिहतशासनम्। तारतरा–स्वस्वसामानिकादिवृन्दारकेभ्यः सातिशयदेहद्युतिकत्वाद् अतिप्रदीप्तयः। तथा अवरेण्या–अनिष्टा अप्रकृष्टाश्च भावाः–क्षुद्रव्यन्तरादिसमुत्पादितग्रहमारिप्रभृत्युपसर्गवर्गरूपाः तेषां दानं 'दांवृङ् लवने' ( सिद्ध० धातुपाठे ) इति वचनात् ततः क्ते सति दानम्। ततः पदत्रयकर्मधारयः। अत्र प्रकृतिप्रत्ययविश्लेषः। इह च श्रीतीर्थराजः पदपद्मसेवाहेवाकित्वात् सम्यग्दृष्टित्वम्, गम्भीरगिस्त्वाद् अप्रतिहतशासनम्, तारतरत्वात् स्वस्वनिकायेषु वैशिष्ट्यम्, अवरेण्यप्रभावदातृत्वाद् धार्मिकाणां विघ्नसङ्घातविघातत्वादिकं च देवासुरकिन्नरेश्वराणां प्रकाशितम्। इति चतुर्थस्तुत्यर्थः ॥ ४ ॥

॥ इतिश्रीसोमतिलकसूरीश्वरकृतसकलजिनसाधारणस्तुत्यर्थः समाप्तः ॥

लिखितः पं. हंसविमलगणिना श्रीनवीनश्रीनवीननगरे ॥

## अन्वयः

श्री–तीर्थ–राजः पद० गम्भीर–गिर्–तारतर–अ–वरेण्य–प्रभाव–दाताः (सन्तः) वः शिवं ददताम्।

## શબ્દાર્થ

पदपद्म०=ચરણ-કમળની....કિન્નરના સ્વામીઓ.
तार=તેજસ્વી.
अवरेण्य=અનિષ્ટ.
दो=કાપવું.
गम्भीरगीस्तारतरावरेण्यप्रभावदाता=ગંભીર છે વાણી જેમની એવા તથા અતિશય તેજસ્વી તેમજ અનિષ્ટ પ્રભાવનો નાશ કરનારા એવા.

## પદ્યાર્થ

**શાસનાનુરાગી સુરની સ્તુતિ—**

"શ્રીતીર્થરાજના ચરણ-કમળની સેવા કરવાના સ્વભાવવાળા એવા સુર, અસુર અને કિન્નરના સ્વામીઓ કે જેઓ ગંભીર વાણીવાળા, અતિશય તેજસ્વી તેમજ ( દુષ્ટ વ્યન્તરાદિકૃત ઉપસર્ગરૂપ ) અનિષ્ટ પ્રભાવનો નાશ કરવાવાળા છે તેઓ તમને મોક્ષ આપો."—૪

* * * * *



श्री गौतम आदि गणधरो.

Lakshmi Art Bombay 8

ख-परिशिष्टम् ।

श्री विसागर नीशसूत्रेता

द्रुतविलम्बितच्छन्दोबद्धा

# ॥ श्रीगौतमस्तुतिः ॥

## ( मुनिराजश्रीचतुरविजयकृताऽवचूरिसमलङ्कृता )

---

श्रीगौतमस्वामिने विज्ञप्तिः--

यदगमत् परशैलभृगौ तमस्तदपि यद् भवता भुवि गौतम ! ।
ननु "निरस्तमतस्तव सेवकं प्रति भवाम्बुधितः पव सेवकम् ॥ १ ॥

### अवचूरिः

यद्० इत्यादि । यद्-यस्मात् कारणात्, यत् तमः-अन्धकारं पापं वा "तमो राहौ गुणे पापे ध्वान्ते' ( श्लो० ५८५ ) इति हैम्यनेकार्थवचनात् । ' परशैलभृगौ ' परः-प्रकृष्टः यः शैलो-मेरुपर्वतः, तस्य भृगुः-शिखराग्रं "भृगुः सानौ जमदग्निप्रपातयोः । शुक्रे रुद्रे च" (श्लो० ५५) इत्यनेकार्थः तस्मिन् अगमत्-प्रययौ तदपि हे गौतम !-हे इन्द्रभूते ! भुवि-पृथिव्याम् । ननु-निश्चयेन भवता निरस्तं-परिक्षिप्तम्, ध्वस्तमित्यर्थः । अतः-अस्माद् हेतोः तव सेवां करोतीति सेवकस्तम्, सेवकं-भृत्यं प्रति भवाम्बुधितः-संसारसमुद्रात् पव-रक्ष ।

### अन्वयः

( हे ) गौतम ! यद् यद् तमः पर-शैल-भृगौ अगमत् तद् अपि भवता ननु भुवि निरस्तम्, अतः तवः सेवकं सेवकं प्रति भवः-अम्बुधितः पव ।

### શબ્દાર્થ

यद् ( मू० यद् )=જે.
अगमत् ( धा० गम् )=ગયું.
पर=ઉત્તમ.
शैल=પર્વત, ગિરિ.
भृगु=શિખર.
परशैलभृगौ=ઉત્તમ પર્વતના શિખર ઉપર.
तमः ( तमस् )=(૧) અંધકાર; (૨) પાપ.
तद् ( मू० तद् )=તે.

अपि=પણ.
यद्=જે માટે.
भवता ( મૂ० भवत् )=આપથી.
भुवि ( મૂ० भू )=પૃથ્વી ઉપર.
गौतम ! ( મૂ० गौतम )=હે ગૌતમ !
ननु=ખરેખર.
निरस्तं ( મૂ० निरस्त )=દૂર કરેલ, નાશ કરેલ.
अतः=એથી કરીને.
तव ( મૂ० युष्मद् )=તારી.
सेवकं ( મૂ० सेवक )=સેવા કરનારાને.
प्रति=ને.
भव=સંસાર.
अम्बुधि=સમુદ્ર.
भवाम्बुधितः=સંસાર-સમુદ્રમાંથી.
पव ( ધા० पव् )=તું રક્ષણ કર (?)
सेवकं ( મૂ० सेवक )=સેવકને, દાસને.

## પદ્યાર્થ

### શ્રીગૌતમસ્વામીને વિનતિ—

"હે [1]ગૌતમ ( પ્રભુ )! જે ( અજ્ઞાનરૂપી ) અંધકાર ( મેરૂ નામના ) ઉત્તમ પર્વતના શિખર ઉપર ગયો હતો તેનો પણ આપે ખરેખર પૃથ્વી ઉપર જેથી કરીને નાશ કર્યો તેથી કરીને તમારી સેવા કરનારા દાસને તમે સંસાર-સમુદ્રમાંથી બચાવો."—૧

* * * * *

### सकलजिनबहुमानसूचनम्—

तनुविभास्तविकर्त्तनमण्डलं कृतकृपं चक्रिवज्जिनमण्डलम् ।
हृदि वहे व्रतिमानसभासुरं प्रणतनव्यकदिव्यसभासुरम् ॥ २ ॥

## अवचूरिः

तनु० इत्यादि । तनोः-शरीरस्य विभया-कान्त्या अस्तं-पराभूतं विकर्त्तनमण्डलम्—रविबिम्बं येन स तम्, चक्रिवत्-सार्वभौमनृप इव कृतकृपं, व्रतिनां-संयमिनां मानसे-चेतसि भासुरं-दीप्तिमत् । नव्या-नूतना दिव्या-देवसम्बन्धिनी मनोहरा वा सभा-संसद् येषां ते नव्यकदिव्यसभाश्च ते सुराश्च नव्यकदिव्यसभासुराः, प्रणता नव्यकदिव्यसभासुराः यत् तत् प्रणतनव्यकदिव्यसभासुरम्, तत् प्रणत-नव्य० । जिनमण्डलं-अर्हत्समूहं हृदि-चेतसि वहे-धारयामि ॥ २ ॥

## अन्वयः

तनु-विभा-अस्त-विकर्त्तन-मण्डलं चक्रि-वत् कृत-कृपं व्रतिन्-मानस-भासुरं प्रणत-नव्यक-दिव्य-सभा-सुरं जिन-मण्डलं हृदि वहे ।

---

१ આ ગૌતમસ્વામીના જીવનની સ્થૂલ રૂપરેખા માટે જુઓ શ્રીભક્તામર-સ્તોત્રની પાદપૂર્તિરૂપ કાવ્યસંગ્રહનો પ્રથમ વિભાગ ( પૃ० ૨૨-૨૫ ).

## શબ્દાર્થ

तनु=શરીર, દેહ.
विभा=કાન્તિ, પ્રભા.
अस्त ( ધા૦ अस् )=દૂર કરેલ.
विकर्त्तन=સૂર્ય.
मण्डल=મણ્ડળ, બિમ્બ.
तनुविभाऽस्तविकर्त्तनमण्डलं=દેહની કાન્તિ વડે પરાસ્ત કર્યું છે સૂર્યના મણ્ડળને જેણે એવાને.
कृत ( ધા૦ कृ )=કરેલ.
कृपा=કૃપા, મહેરબાની.
कृतकृपं=કરી છે કૃપા જેણે એવાને.
चक्रिन्=ચક્રવર્તી.
चक्रिवत्=ચક્રવર્તીની માફક.
जिन=તીર્થંકર.
मण्डल=સમૂહ.
जिनमण्डलं=તીર્થંકરોના સમૂહને.
हृदि ( મૂ૦ हृद् )=હૃદયમાં, અંતઃકરણમાં.
वहे ( ધા૦ वह् )=હું વહન કરું છું.
व्रतिन्=વ્રતી, સંયમી.
मानस=મન, ચિત્ત.
भासुर=દીપતું.
व्रतिमानसभासुरं=સંયમીઓના ચિત્તને વિષે દીપતા.
प्रणत ( ધા૦ नम् )=પ્રણામ કરેલ, વન્દન કરેલ.
नव्य=નવીન.
दिव्य=દિવ્ય, સ્વર્ગીય, સ્વર્ગ સંબંધી.
सभा=સભા.
सुर=દેવ.
प्रणतनव्यकदिव्यसभासुरं=પ્રણામ કર્યો છે નવી તેમજ દિવ્ય સભાવાળા સુરોએ જેને એવાને.

## પદ્યાર્થ

સકલ જિનેશ્વરોનું બહુમાન—

" પોતાના દેહની દ્યુતિ વડે જેણે સૂર્યના મણ્ડળને પરાસ્ત કર્યું છે એવા, વળી ચક્રવર્તી માફક કૃપાળુ, તથા સંયમીઓના મનને વિષે દીપતા તેમજ જેને નવીન તેમજ દિવ્ય સભાવાળા સુરોએ નમન કર્યું છે એવા તીર્થંકરોના સમૂહને હૃદયમાં વહન કરૂં છું. "—૨

* * * * *

**जिनवाण्याः स्तवनम्—**

स्फुरितविभ्रमशुभ्रसरस्वतीभ्रमितभङ्गिविभैकसरस्वती ।
भगवतो मधुराऽऽशुं शुभेतरांऽहसि रिपुप्रतिमा शुशुभेतराम् ॥ ३ ॥

## अवचूरिः

स्फुरित० इत्यादि । स्फुरिताः-शोभमानाः विभ्रमाः स्फुरितविभ्रमाः तैः शुभ्रा-अवदाता सरस्वती-तरङ्गिणी तस्या भ्रमिता-इतस्ततश्चङ्क्रान्त्यः भङ्ग्यः-तरङ्गाः ताभिः सदृक्षा विभा-कान्तिर्यस्याः सा स्फुरितविभ्रमशुभ्रसरस्वतीभ्रमितभङ्गिविभा, अतिशयेन निर्मला विविधभङ्गवती चेत्यर्थः, भगवतः-तीर्थकृतः 'एकसरस्वती' एका-अद्वितीया सरस्वती-वाणी शुशुभेतरां-अतिशयेनाऽशोभत-व्यराजत इति

सम्बन्धः । कथंभूता एक० ? इतरांहसि-अन्यजनानां पातके आशु-शीघ्रं रिपुप्रतिमा-शत्रुतुल्या, तन्नाशनशीलत्वात् । पुनः कथम्भूता ? मधुरा-प्रिया रसवती वा "मधुरस्तु प्रिये स्वादौ रसे च रसवत्यपि ( श्लो० ११८८ ) इति हैम्यनेकार्थवचनात् । शुभा-शोभना निष्कलङ्का, अविसंवादित्वात् ॥ ३ ॥

## अन्वयः

मधुरा शुभा इतर-अंहसि आशु रिपु-प्रतिमा स्फुरित-विभ्रम-शुभ्र-सरस्वती-भ्रमित-भङ्गि-विभा भगवतः एक-सरस्वती शुशुभेतराम् ।

## શબ્દાર્થ

स्फुरित ( धा० स्फुर् )=શોભતો.
विभ्रम=વિભ્રમ.
शुभ्र=નિર્મળ.
सरस्वती=નદી.
भ्रमित ( धा० भ्रम् )=ભમતા.
भङ्गि=તરંગ, મોજું.
विभा=કાન્તિ, તેજ.
स्फुरितविभ्रमशुभ्रसरस्वतीभ्रमितभङ्गिविभा= શોભતા વિભ્રમ વડે શુભ્ર નદીના આમથી તેમ અથડાતા તરંગોના જેવી કાન્તિ છે જેની એવી.
एक=અદ્વિતીય.
सरस्वती=વાણી.
एकसरस्वती=અદ્વિતીય વાણી.
भगवतः ( मू० भगवत् )=પ્રભુની.
मधुरा ( मू० मधुर )=મધુર.
आशु=જલદી.
शुभा ( मू० शुभ )=ઉજ્જવળ.
इतर=અન્ય.
अंहस्=પાપ.
इतरांहसि=અન્યના પાપને વિષે.
रिपु=શત્રુ.
प्रतिमा=સરખાપણું
रिपुप्रतिमा=શત્રુની પ્રતિમા.
शुशुभेतरां ( धा० शुभ )=અત્યંત શોભી રહી.

## પદ્યાર્થ

**જિન-વાણીની પ્રશંસા—**

"મધુર, ઉજ્જવળ, અન્યનાં પાપને ( નષ્ટ કરવામાં ) સત્વર શત્રુસમાન તેમજ શોભાયમાન વિભ્રમ વડે શુભ્ર એવી નદીના આમથી તેમ અથડાતા તરંગોની જેમ શોભતી એવી પ્રભુની અદ્વિતીય વાણી અત્યંત શોભી રહી."—૩

* * * * *

**श्रुतदेवतायै प्रार्थना—**

[1]कठिनविघ्नशतात् [2]श्रुतदेवते ! [3]जिनपभक्तिमतः [2]श्रुतदेऽव [4]ते [5]।
[6]विशदशासनगं [7]वरमानवं [8]प्रतिदिनं [9]मदिनं [10]न [11]रमानवम् ॥ ४ ॥



निर्वाणकलिकायाम् —

"श्रुतदेवतां शुक्लवर्णां हंसवाहनां चतुर्भुजां वरदकमलान्वित
दक्षिणकरां पुस्तकाक्षमालान्वितवामकरां चेति ।"



नि. सा. प्रेस.

## अवचूरिः

कठिन० इत्यादि । हे श्रुतदेवते !– ज्ञानाधिष्ठात्रि ! देवि ! । हे श्रुतदे !– ज्ञानदायिनि ! । कस्य ? जिनपभक्तिमतः–तीर्थकृत्परिचर्याकारिणः । ते–तव विशदशासनगं–सदादेशवर्तिनं आज्ञाकारिणमित्यर्थः प्रतिदिनम्–अनुवासरं, मदः–अहङ्कारोऽस्यास्तीति मदी तं मदिनम्, न मदिनं– निरभिमानम्, रमया–लक्ष्म्या नवं– भासुरं वरमानवं–भव्यजनम् 'कठिनविघ्नशतात्' विघ्नानां–प्रत्यूहानां शतं विघ्नशतम्, कठिनं–दुःसहं विघ्नशतं कठिनविघ्नशतं तस्मात् कठि० अव–रक्ष, त्रायस्व इत्यर्थः ॥ ४ ॥

## अन्वयः

( हे ) श्रुत–देवते ! जिन–प–भक्तिमतः श्रुत–दे ! ते प्रति–दिनं विशद–शासन–गं मदिनं न रमा–नवं वर–मानवं कठिन–विघ्न–शतात् अव ।

## શબ્દાર્થ

कठिन=કઠિન, સખ્ત.
विघ्न=વિઘ્ન, સંકટ.
शत=સો.
कठिनविघ्नशतात्=સેંકડો સખ્ત સંકટોમાંથી.
श्रुतदेवते ! ( મૂ० श्रुतदेवता )=હે શ્રુતની અધિષ્ઠાયિકા દેવી !
जिनप=તીર્થંકર.
भक्तिमत्=ભક્તિશાળી, ભક્ત.
जिनपभक्तिमतः=તીર્થંકરના ભક્તને.
श्रुत=શ્રુત ( જ્ઞાન ).
दा=આપવું.
श्रुतदे !=શ્રુતને આપનારી.
अव ( ધા० अव् )=તું રક્ષણ કર.
ते ( મૂ० युष्मद् )=તારા.
विशद=નિર્મળ.
शासन=આજ્ઞા.
गम्=જવું.
विशदशासनगं=નિર્મળ આજ્ઞાને પામેલ.
वर=ઉત્તમ.
मानव=માનવ, મનુષ્ય.
वरमानवं=ઉત્તમ માનવને.
प्रतिदिनं=અહોનિશ, હરરોજ.
मदिनं ( મૂ० मदिन् )=અહંકારી, ગર્વિષ્ઠ.
न=નહિ.
रमा=લક્ષ્મી.
नव=નૂતન, તરુણ.
रमानवं=લક્ષ્મી વડે નૂતન.

## પદ્યાર્થ

**શ્રુત–દેવતાને પ્રાર્થના—**

"હે શ્રુતદેવતા ! હે તીર્થંકરના ભક્તને શ્રુત ( જ્ઞાન ) દેનારી ( દેવી ) ! પ્રતિદિન તારી નિર્મળ આજ્ઞાને પાળનારા, નિરભિમાની અને એથી કરીને લક્ષ્મી વડે નૂતન એવા ઉત્તમ માનવને તું સેંકડો સખ્ત સંકટોમાંથી બચાવ."—૪

## સ્પષ્ટીકરણ

### શ્રુત-દેવતાનું સ્વરૂપ—

શ્રુત-દેવતાનાં વિવિધ સ્વરૂપો અન્યાન્ય ગ્રન્થોમાં નજરે પડે છે. તેમાં નિર્વાણ-કલિકામ નીચે મુજબનો ઉલ્લેખ છે.

"तथा श्रुतदेवतां शुक्लवर्णां हंसवाहनां चतुर्भुजां वरदकमलान्वितदक्षिणकरां पुस्तकाक्षमालान्वितवामकरां चेति"

અર્થાત્—શ્રુત-દેવતાનો શુદ્ધ વર્ણ છે અને હંસ એ એનું વાહન છે. વળી એને ચાર હાથ છે. એના જમણા બે હાથ વરદ અને કમળથી શોભે છે, જ્યારે એના ડાબા બે હાથ પુસ્તક અને જપમાળાથી વિરાજે છે.

શ્રીશોભન-સ્તુતિ (પૃ૦ ૨૫)માં તેમજ '[1]કલ્લાણકંદં'ની સ્તુતિમાં તો શ્રુત-દેવતાનું આસન કમળ હોવાનો ઉલ્લેખ છે. શ્રીપાલ-રાસના [2]બાલાવબોધના પ્રારંભિક ભાગમાં શ્રુત-દેવતાના ચાર હાથ પૈકી એક હાથમાં વેણુનો ઉલ્લેખ દૃષ્ટિ-ગોચર થાય છે, એ વાતની નિમ્ન-લિખિત પદ્ય સાક્ષી પૂરે છે:—

"प्रकटपाणितले जपमालिका, कमलपुस्तकवेणुवराधरा ।
धवलहंससमा श्रुतवाहिनी, हरतु मे दुरितं भुवि भारती ॥"



---

१ આ રહ્યું તે પદ્ય—

"कुंदिंदुगोक्खीरतुसारवन्ना, सरोजहत्था कमले निसन्ना ।
वाएसिरी पुत्थयवग्गहत्था, सुहाय सा अम्ह सया पसत्था" ॥

[ कुन्देन्दुगोक्षीरतुषारवर्णा सरोजहस्ता कमले निषण्णा ।
वागीश्वरी पुस्तकवर्ग( व्यग्र )हस्ता सुखाय सा नः सदा प्रशस्ता ॥ ]

२ આ બાલાવબોધ ઇ. સ. ૧૮૯૪ માં શ્રાવક ખીમજી ભીમસિંહ માણકે પ્રસિદ્ધ કર્યો હતો.

ग—परिशिष्टम् ।

श्रीजिनपद्ममुनिवर्यविरचितः

# ॥ श्रीपार्श्वनाथस्तवः ॥

( मुनिराज'कल्याणविजय'विरचितयाऽवचूर्या समलङ्कृतः )

तमालनीलच्छविपिच्छलाङ्गः, सिद्धान्तमुद्रासहितो मनोज्ञः ।
जीयाज्जिनेन्द्रप्रभु'पार्श्वनाथः', सिद्धान्तमुद्रासहितो मनोज्ञः ॥ १ ॥

—उपजातिः

## अवचूरिः

तमालेति । तमालस्तापिच्छापरपर्यायो वृक्षविशेषः तद्वन्नीलया-हरितया छव्या-द्युत्या पिच्छलं-सस्नेहमङ्गं-देहो यस्य सः । "पिच्छलो विजिलेऽन्यवत्" इति मेदिनिः ( श्लो० ११५ )। तथा सिद्धान्तप्रतिपादिता मुद्रा सिद्धान्तमुद्रा, मैत्रीप्रमोदादिसूचिका आगमोक्ता जिनमुद्रा इति यावत्, तया सहितः; अथवा सिद्धानां-योगसिद्धिभाजां महायोगिनाम् अन्तमुद्रया-समाध्यवस्थानलक्षणया अन्तिमावस्थया सहितः-अविनाकृत् । मनांसि-अन्तःकरणानि जानाति इति मनोज्ञः-प्राणिगणमनोभावविज्ञायकः । जीयात्-सर्वोत्कर्षेण वर्तिषीष्ट । जिनानां-सामान्यकेवलिनामिन्द्रो जिनेन्द्रः, प्रभुः-सामर्थ्यवान्, जिनेन्द्रश्चासौ प्रभुश्चेति विशेषणसमासः, पार्श्वनाथः-एतदभिधानस्त्रयोविंशस्तीर्थकरः । जिनेन्द्रप्रभुश्चासौ पार्श्वनाथश्चेति कर्मधारयः । सिद्धान्तस्य-जिनागमस्य मुद्रां-पिधानम् अस्यन्ति-क्षिपन्ति ते सिद्धान्तमुद्रासाः-आगमरहस्योद्घाटकाः सूरयः, तेषां हितो-हितावहः । अथवा सिद्धान्तमुद्रायाम्-आगममर्यादायामासते-उपविशन्ति ते सिद्धान्तमुद्रासाः, यद्वा सिद्धान्तमुद्राम् असन्ते-आददते, वा सिद्धान्तमुद्रया असन्ति-दीप्यन्ते ते सिद्धान्तमुद्रासाः, यद्वा सिद्धान्ते मुद्-प्रीतिर्येषां ते, रायाः-लक्ष्म्याः आसः-क्षेपो येषां ते द्वन्द्वे कृते सिद्धान्तमुद्रासा-मुनयः तेषां हितः सिद्धान्तमुद्रासहितः । मनोज्ञः-अभिरामः ॥ १ ॥

## अन्वयः

तमाल-नील-छवि-पिच्छल-अङ्गः सिद्धान्त [ सिद्ध-अन्त ]-मुद्रा-सहितः मनस्-ज्ञः सिद्धान्त-मुद्रा-अस [ आस ]-हितः मनोज्ञः जिन-इन्द्र-प्रभु-पार्श्वनाथः जीयात् ।

## શબ્દાર્થ

तमाल=તમાલ, એક જાતનું ઝાડ.
नील=શ્યામ.
छवि=દ્યુતિ, પ્રભા.
पिच्छल=સ્નેહાળ.

अङ्ग=દેહ, શરીર.
तमालनीलच्छविपिच्छलाङ्गः=તમાલના જેવી નીલ કાંતિથી પિચ્છલ છે દેહ જેનો એવા.
सिद्धान्त=સિદ્ધાન્ત, આગમ.

सिद्ध=યોગ–સિદ્ધ, મહાયોગી.
अन्त=અન્તિમ.
मुद्रा=(૧) મુદ્રા; (૨) અવસ્થા.
सहित=યુક્ત, સાથે.
सिद्धान्तमुद्रासहितः=(૧) સિદ્ધાન્તમાં ( પ્રરૂપેલી ) મુદ્રાથી યુક્ત; (૨) સિદ્ધની અંતિમ અવસ્થાથી યુક્ત.
मनस्=ચિત્ત.
ज्ञ=જાણનાર.
मनोज्ञः=ચિત્તને જાણનાર.
जीयात् ( धा० जि )=જયવંતા વર્તો.
जिन=સામાન્ય કેવલી.
इन्द्र=સ્વામી.
प्रभु=સમર્થ.
पार्श्वनाथ=પાર્શ્વનાથ, ત્રેવીસમા તીર્થંકર.
जिनेन्द्रप्रभुपार्श्वनाथः=સામાન્યકેવલીના સ્વામી તથા સમર્થ પાર્શ્વનાથ.

मुद्रा=(૧) ઢાંકણુ; (૨) મર્યાદા.
अस्=ફેંકવું.
अस्=(૧) ગ્રહણ કરવું; (૨) દીપવું.
आस्=બેસવું.
मुद्=પ્રીતિ, હર્ષ.
रै=લક્ષ્મી.
आस=ફેંકવું તે, ત્યાગ.
हित=હિતકારી, કલ્યાણકારી.
सिद्धान्तमुद्रासहितः=(૧) આગમના રહસ્યને ઉકેલનારાઓને હિતકારી; (૨) આગમની મર્યાદાને વિષે રહેલાઓને કલ્યાણકારી; (૩) આગમની મુદ્રાને ગ્રહણ કરનારાઓને હિતકારી; (૪) આગમની મુદ્રા વડે દીપતાઓને કલ્યાણકારી; (૫) સિદ્ધાન્તને વિષે પ્રીતિવાળા તેમજ લક્ષ્મીના ત્યાગી એવાઓને હિતકારી.
मनोज्ञः ( मू० मनोज्ञ )=મનોહર.

## પદ્યાર્થ

" તમાલ ( વૃક્ષ )ના જેવી નીલ પ્રભા વડે વત્સલ શરીરવાળા તથા સિદ્ધાન્ત ( માં સૂચવેલી મૈત્રી, પ્રમોદાદિ ) મુદ્રાથી ( કે છેક જિન–મુદ્રા )થી યુક્ત [ અથવા ( યોગ–) સિદ્ધની સમાધિ–અવસ્થારૂપ અંતિમ અવસ્થાથી યુક્ત ], ( પ્રાણીઓના ) મન( ના ભાવો )ને જાણનારા, આગમના રહસ્યનું ઉદ્‌ઘાટન કરનારા ( સૂરિવરો )ને હિતકારી [ અથવા આગમ( પ્રણીત ) મર્યાદામાં રહેનારા, આગમની મુદ્રાને ગ્રહણ કરનારા, સિદ્ધાન્તની મુદ્રાથી દીપતા કે આગમને વિષે પ્રીતિવાળા તેમજ લક્ષ્મીના ત્યાગી એવા ( યોગિજનો )ને કલ્યાણકારી ], સામાન્ય કેવલીઓના નાથ તથા સમર્થ એવા પાર્શ્વનાથ જયવંતા વર્તો. "—૧

## સ્પષ્ટીકરણ

**અલંકાર-વિચાર—**

આ પદ્ય તેમજ ત્યાર પછીનાં પાંચ પદ્યો પણ તેમજ ચતુર્થ પરિશિષ્ટગત છઠ્ઠું પદ્ય [1]સમપાદસમાનતારૂપ યમકથી અલંકૃત છે. વળી અહીં આપેલું ૯૬ પદ્યનું મૂળ કાવ્ય પણ આ

૧ આને પાદાભ્યાસ યમકના અભિન્ન સમપાદ તરીકે પણ ઓળખાવવામાં આવે છે. જુઓ શિશુપાલવધ (સ૦ ૧૯, શ્લો૦ ૫)ની શ્રીમલ્લિનાથકૃત ટીકા. આવા યમકનાં ઉદાહરણો આ મહાકાવ્યના અનેક પ્રકારના યમક અને ચિત્રથી અલંકૃત ૧૯ મા સર્ગમાંનાં ૫,૭,૯,૧૫,૧૭,૧૯,૨૧,૨૫,૩૧,૩૮,૪૨,૪૮,૫૦,૫૨,૫૪,૫૬,૬૪,૭૪,૭૬,૮૦ અને ૮૨ પદ્યો પૂરાં પાડે છે.

યમકથી શોભે છે, એથી કરીને યમકનો લક્ષણ અને વિધાનની દૃષ્ટિએ વિચાર કરવો અસ્થાને નહિ ગણાય. આ સંબંધમાં દણ્ડીનું કથન એ છે કે—

" अव्यपेत–व्यपेतात्मा, व्यावृत्तिर्वर्णसंहतेः ।
यमकं तच्च पादाना—मादिमध्यान्तगोचरम् ॥ १ ॥
एक–द्वि–त्रि–चतुष्पादे—र्यमकानां विकल्पना ।
आदि–मध्या–ऽन्त–मध्या–ऽन्त—मध्या–ऽऽद्या–ऽऽद्या–ऽन्तसर्वतः ॥ २ ॥ "

આ પરત્વે વાગ્ભટાલંકાર ( પરિ૦ ૪, શ્લો૦ ૨૨ )ની સ્વોપજ્ઞ વૃત્તિ તરફ નજર કરતાં સમજાય છે કે [1]ભિન્ન અર્થવાળાં ચરણો કે તેના એક વિભાગરૂપ પદોની આવૃત્તિ તે 'યમક' છે. આ આવૃત્તિ સંયુત તેમજ અસંયુત એમ ઉભય પ્રકારની છે. વચમાં કોઇ અન્ય પદ ન આવ્યું હોય તો તે આવૃત્તિ સંયુત ( જોડાયેલી ) કહેવાય છે; એથી વિપરીત તે અસંયુત છે. ચરણોની સંયુત આવૃત્તિના ( પ્રથમ અને દ્વિતીય ચરણની સમાનતારૂપ ) [2]આદિપાદ યમક, ( બીજા અને ત્રીજાની સદૃશતારૂપ ) [3]મધ્યપાદ યમક અને ( ત્રીજા અને ચોથાની એકતારૂપ ) [4]અન્તપાદ યમક ( પાદાન્ત યમક ) એમ ત્રણ પ્રકારો છે. અસંયુત આવૃત્તિના [5]આદિ–મધ્ય ( પ્રથમ અને તૃતીયની સમાનતા ), [6]મધ્ય–અન્ત ( બીજા અને ચોથાની સમાનતા ) અને [7]આદિ–અન્ત ( પ્રથમ અને ચતુર્થની સમાનતા ) એમ ત્રણ પ્રકારો છે.

આ ઉપરથી જેટલી માહિતી મળે છે તે કરતાં વિશેષ હકીકત કલિકાલસર્વજ્ઞ શ્રીહેમચન્દ્રસૂરિકૃત કાવ્યાનુશાસનની સ્વોપજ્ઞ વૃત્તિ ( પૃ૦ ૨૧૦–૨૧૧ ) પૂરી પાડે છે. ત્યાં જે પાદયમકના પંદર પ્રકારો સૂચવ્યા છે તેમાં ઉપર સૂચવેલ છએ પ્રકારોનો સમાવેશ થઇ જાય છે, પરંતુ બીજા નવ રહી જાય છે. આ નવ પ્રકારો બે કરતાં વધારે ચરણોની સમાનતાને આભારી છે. જેમકે [8]પ્રથમનાં ત્રણે ચરણોની; પ્રથમ, દ્વિતીય અને ચતુર્થની; પ્રથમ, તૃતીય અને ચતુર્થની; અને દ્વિતીય, તૃતીય અને ચતુર્થની સમાનતા; [9]પ્રથમ અને દ્વિતીયની તથા તૃતીય અને ચતુર્થની; [10]પ્રથમ અને તૃતીયની અને બાકીનાં બેની; [11]પ્રથમ અને ચતુર્થની અને મધ્યના બેની; [12]ચારે ચરણોની સમાનતા અને [13]સમગ્ર શ્લોકની આવૃત્તિ.

---

૧ લાટાનુપ્રાસમાં અતિવ્યાપ્તિ ન થાય તે માટે આ પદ યોજવામાં આવ્યું છે.

૨–૭ શ્રીગોવિન્દ ઠક્કુરે રચેલા કાવ્ય–પ્રદીપ ( પૃ૦ ૨૦૪ )માં તેમજ શ્રીરુદ્રટકૃત કાવ્યાલંકાર-( પૃ૦ ૨૨–૨૩ )માં આને મુખ, ગર્ભ, પુચ્છ, સંદંશ, સંદષ્ટક અને આવૃત્તિ તરીકે ઓળખાવેલ છે.

૮ એવું ઉદાહરણ શ્રીહેમચન્દ્રીય કાવ્યાનુશાસન ( પૃ૦ ૨૧૧ )માંથી નીચે મુજબ મળે છેઃ—

" प्रभावतोऽनाम न वासवस्य, प्रभावतो नाम नवासवस्य ।
प्रभावतो नाम नवा सवस्य, विच्छित्तिरासीत् त्वयि विष्टपस्य ॥ "

૯–૧૧ આને અનુક્રમે યુગ્મક, સમુદ્‌ગક અથવા અર્ધાવૃત્તિ અને પરિવૃત્તિ કહેવામાં આવે છે. જુઓ કાવ્ય–પ્રદીપ ( પૃ૦ ૨૦૫ ) તથા કાવ્યાલંકાર ( પૃ૦ ૨૪–૨૫ ).

૧૨ આ પંક્તિ કહેવાય છે. કાવ્યપ્રદીપ (પૃ૦ ૨૦૫)માં સૂચવ્યા મુજબ કેટલાક આને 'મહાયમક' પણ કહે છે.

૧૩ આ મહાયમક કહેવાય છે. આના ઉદાહરણાર્થે નિમ્ન–લિખિત શ્લોક કાવ્યાનુશાસન ( પૃ૦ ૨૧૨ )માં તેમજ કાવ્યાલંકાર ( પૃ૦ ૨૬ )માં દૃષ્ટિગોચર થાય છેઃ—

" स त्वारं भरतो वश्य–मवलं विततारवम् ।
सर्वदा रणमानैषी–द्वानलसमस्थितः ॥
सत्त्वारम्भरतोऽवश्य–मवलम्बिततारवम् ।
सर्ववारणमानैषी, द्वानलसमस्थितः ॥ "

આ પ્રમાણે જેમ પાદ-યમકના પંદર પ્રકારો પડે છે, તેમ પદ-યમકના પણ અનેક પ્રકારો પડે છે; કેમકે પ્રત્યેક ચરણના બે બે ભાગો પાડતાં તેના પ્રથમના પ્રારંભમાં યમક હોય એવા પદ-યમકના ૧૪ પ્રકારો પડે છે, કેમકે ઉપર્યુક્ત પંદર પ્રકારો પૈકી શ્લોકાવૃત્તિરૂપ મહા-યમક માટે અત્ર સ્થાન નથી. એવી રીતે પ્રત્યેક ચરણના અન્તિમ ભાગમાં યમક હોય તેવા પ્રકારોની સંખ્યા પણ ચૌદની જ છે. એટલે બધા મળીને આમ ૨૮ ભેદો પડે છે. એવી રીતે ત્રણ ત્રણ ભાગમાં વિભક્ત થતા ચરણના પ્રારંભમાં યમક હોય એવા ૪૨, જ્યારે ચાર ચાર ભાગોમાં વહેંચાતા ચરણ સંબંધી ૫૬ પ્રકારો છે. આ તો સ્થાનની નિયતતાને લક્ષીને ભેદોનો વિચાર થયો. જેમકે [1]પ્રથમાદિ પાદોના અન્ત ભાગની દ્વિતીયાદિ પાદોના પ્રારંભમાં આવૃત્તિ ઇત્યાદિ. એવી રીતે સ્થાનમાં પરિવર્તન થતાં જે ભેદો પડે છે તેનો પણ વિચાર થઇ શકે છે.

वरेण्यलावण्यनिधे! व(वि)धेहि, सदा महानन्दमहासुखानि ।
प्रभावभङ्गीरभितस्त्रिलोक-सदामहानं दमहासुखानि॥ २ ॥

—उपेन्द्रवज्रा

## अवचूरिः

वरेण्येति । वरेण्यं-प्रकृष्टं लावण्यं-लवणिमा वरेण्यलावण्यं, तस्य निधिः-निधानं, तदामन्त्रणे । विधेहि-कुरु । सदा-नित्यम् । महाः-उत्सवाः, आनन्दः-प्रमोदः, महासुखानि-विशालसौख्यानि, यद्वा महानन्दस्य-मोक्षस्य महासुखानि "महानन्दोऽमृतं सिद्धिः" इति हैमः ( का० १, श्लो० ७४), तानि। 'विधेहि' इति क्रियया सह योजना । प्रभावस्य-प्रतापस्य भङ्ग्यो-रचनाः प्रभावभङ्ग्यः, ताः । अभितः-आभिमुख्येन । त्रिलोके सीदन्ति इति त्रिलोकसदः—भुवनत्रयवर्तिप्राणिनः तेषाम् आमानां-रोगाणां "आमो रुक्तद्विदोः पुंसि" इति मेदिनिः, ( श्लो० १ ) हानं-हानिः तत् । हाः—हानं, जिहीतेः क्विपि हाशब्दस्य निष्पत्तिः, दमस्य-पापरूपस्य दण्डस्य हाः-दमहाः, "दण्डः स्यात् साहसं दमः" इति हैमः । ( अभि० का० ३, श्लो० ४०० ) सुष्ठु खानि-संवेदनानि देवलोकानि वा सुखानि । "खमिन्द्रिये पुरे क्षेत्रे शून्ये बिन्दौ विहायसि । संवेदने देवलोके शर्मण्यपि नपुंसकम्" इति मेदिनिः ( श्लो० १ ) । दमहाश्च सुखानि च दमहासुखानि तानि । इदमपि कर्मपदं 'विधेहि' क्रियया योज्यम् ॥ २ ॥

## अन्वयः

( हे ) वरेण्य-लावण्य-निधे ! मह-आनन्द-महत्-सुखानि प्रभाव-भङ्गीः त्रि-लोक-सद्-आम-हानं दम-हा-सु-खानि अभितः सदा विधेहि ।

१ દ્વિખણ્ડી પ્રથમ પાદના દ્વિતીય ખણ્ડના દ્વિતીય પાદના પ્રથમ ખણ્ડમાં પુનરાવૃત્તિ એટલે અન્ત-આદિ યમક, એવી રીતે પ્રથમ પાદના પ્રથમ ખણ્ડની દ્વિતીય પાદના દ્વિતીય ખણ્ડમાં આવૃત્તિ યાને આદિ-અન્ત યમક, તથા આ બે પ્રકારના યમકનો સમુચ્ચય, ત્રિખણ્ડી પાદ આશ્રીને પ્રથમ પાદનો પ્રથમ ખણ્ડ અને દ્વિતીય પાદનો મધ્ય, આ બેની ઉલટા સુલટી તેમજ સમુચ્ચય, તથા પ્રથમ પાદનો મધ્ય ભાગ અને દ્વિતીય પાદનો અન્તિમ ભાગ, એની ઉલટા સુલટી તથા એનો સમુચ્ચય. આ પણ નિયમબદ્ધ છે.

## શબ્દાર્થ

वरेण्य=(૧) ઉત્તમ; (૨) ઇચ્છવા યોગ્ય.
लावण्य=લાવણ્ય, લવણિમા.
निधि=નિધિ, ભંડાર.
वरेण्यलावण्यनिधे !=(૧) હે ઉત્તમ લાવણ્યના ભંડાર !; (૨) હે ઇચ્છવા યોગ્ય સૌન્દર્યના નિધાન !
विधेहि ( धा० धा )=તું કર.
सदा=સર્વદા, હમેશાં.
मह=ઉત્સવ.
आनन्द=આનન્દ, પ્રમોદ.
महानन्द=મોક્ષ.
महत्=મોટું.
सुख=સુખ.
महानन्दमहासुखानि=(૧) ઉત્સવ, આનન્દ અને મહાસુખને; (૨) મોક્ષના મોટા સુખને.
प्रभाव=પ્રભાવ, પ્રતાપ.
भङ्गी=રચના, પ્રકાર.
प्रभावभङ्गीः=પ્રતાપના પ્રકારોને.
अभितः=અભિમુખ.
त्रिलोक=ત્રૈલોક્ય.
सद्=રહેવું.
आम=રોગ.
हान=હાનિ, નાશ.
त्रिलोकसदामहानं=ત્રૈલોક્યમાં વસતા ( પ્રાણીઓ )ના રોગના નાશને.
दम=દણ્ડ.
हा=હાનિ.
सु=શ્રેષ્ઠતાવાચક અવ્યય.
ख=(૧) જ્ઞાન; (૨) દેવલોક.
दमहासुखानि=(૧) દણ્ડની હાનિને તેમજ શ્રેષ્ઠ જ્ઞાનને; (૨) દણ્ડના નાશને તેમજ સુન્દર દેવલોકને.

## પદ્યાર્થ

“ હે ઉત્તમ [ અથવા અભીષ્ટ ] લાવણ્યના ભંડાર ! ઉત્સવ, આનન્દ અને મહાસુખને, પ્રભાવના પ્રકારોને, ત્રૈલોક્ય–વાસી ( પ્રાણીઓ )ના રોગના નાશને, ( પાપરૂપ ) દણ્ડના વિનાશને તેમજ શ્રેષ્ઠ સંવેદનને [ અથવા સ્વર્ગને ] તું કર. ”—૨

———:o:———

सदर्घमुक्तोपम ! तारकाया–ऽसुबन्धुराऽऽरामजयाङ्कसार ! ।
सदर्घ ! मुक्तोपम ! तारकायाः, सुबन्धुराराम ! जयाङ्क ! सार ! ॥ ३ ॥

—उपे०

## अवचूरिः

सदर्घेति । सदर्घाभिः–सन्मूल्याभिर्मुक्ताभिरुपमा–साद‍ृश्यं यस्य सः, तदामन्त्रणे । तारयति भवसमुद्राविति तारकः, तदामन्त्रणं । या–संसारपरिभ्रमणरूपा यात्रा, “ या यात्राप्तिधूमितत्यागेषु ” इति मेदिनिः ( श्लो० १ )। यायाः सुः–प्रसवो यासुः, “ सुस्तु प्रसवे गर्भमोचने ” इति मेदिनिः ( श्लो० १ )। न विद्यते यासुर्यस्यः सः अयासुः, निवृत्तभवभ्रमण इति भावः । अथवा अयैः–अगत्वैरसुभिः–ज्ञानादिभावप्राणैर्बन्धुरो–नम्रः, यद्वा अयः–शुभावहो विधिः, असवश्च–ज्ञानादिभावप्राणाः तैर्बन्धुरो–नम्रः, तेषां वा बन्धुरो– मुकुटः, शोभाकारित्वेन भूषणरूप इत्यर्थः । “ बन्धुरं मुकुटे पुंसि स्त्री।चिह्नतैलकल्कयोः । बन्धूके बधिरे हंसे त्रिषु स्याद् रम्यनम्रयोः ॥ ” इति मेदिनिः ( श्लो० १८९ )।

आरामाणि–समन्ताद्रम्याणि " रामा योषा हिङ्गुनद्योः क्लीबं वास्तूककुष्ठयोः । ना राघवे च वरुणे रैणुकेये हलायुधे । हये च पशुभेदे च त्रिषु चारौ सितेऽसिते " इति मेदिनिः ( श्लो० २६–२७ ) । जयस्य अङ्गानि–उपायाः, "अङ्गं गात्रे प्रतीकोपाययोः पुंभूम्नि नीवृति " इति मेदिनिः ( श्लो० ४ ) । तानि एव सारं–धनं बलं वा यस्य सः, तदामन्त्रणे । सन्–समीचीनः अर्घः–पूजाविधिर्यस्य सः, " अर्घः पूजाविधौ मूल्ये " इति मेदिनिः (श्लो०१), । तदामन्त्रणे । मुक्ता–त्यक्ता उपमा–उपमानं येन सः, तथोक्तः, अनुपम इति यावत्, यद्वा मुक्तः–कर्मभिस्त्यक्तः । तथा उप–समीपे मा–लक्ष्मीर्यस्य स उपमः, तदामन्त्रणे । तारकायाः—कनीनिकायाः दृष्टेर्वा । " तारको दैत्यभित्कर्णधारयोर्न द्वयोर्दृशि ॥ कनीनिकायामृक्षे च न पुमांस्त्रातरि त्रिषु । " इति मेदिनिः ( श्लो० ९९–१०० ) । सुबन्धुरारामः–अतिरम्योपवनं, तदामन्त्रणे । जय–सर्वोत्कर्षेण वर्तस्व । 'अङ्ग' इति सम्बोधनार्थेऽव्ययः' । " अङ्ग सम्बोधने हर्षे सम्भ्रमासूययोरपि " इति मेदिनिः ( अव्यये श्लो० १२ ) । सारः–प्रधानः, तदामन्त्रणे । अत्र पद्ये तृतीयपादस्य सविसर्जनीयत्वेऽपि " नकार–णकारयोरस्वरमकार–नकारयोर्विसर्जनीयस्य भावाभावयोरपि न विरोध इति केचित् " इति वचनात् न यमकभङ्गः ॥ ३ ॥

## अन्वयः

अङ्ग सत्–अर्घ–मुक्ता–उपम ! तारक ! अ–या–सु [ अय–असु ]–बन्धुर ! आ–राम–जय–अङ्ग–सार ! सत्–अर्घ ! मुक्त–उपम ! [ मुक्त ! उप–म ! ] तारकायाः सु–बन्धुर–आराम ! सार ! जय ।

## શબ્દાર્થ

सत्=શ્રેષ્ઠ.
अर्घ=મૂલ્ય.
मुक्ता=મોતી.
उपमा=ઉપમા, સમાનતા.
सदर्घमुक्तोपम !=હે શ્રેષ્ઠ મૂલ્યવાળાં મોતીઓના સમાન !
तारक=હે તારનાર !
या=યાત્રા.
सु=પ્રસૂતિ, જન્મ.
अयासु=( સંસાર–પરિભ્રમણરૂપ ) યાત્રાનો જન્મ જેમાં નથી એવા.
अय=(૧) નહિ જનાર, સ્થાયી; ( ૨ ) લાભ; ( ૩ ) શુભ કાર્ય.
असु=પ્રાણ.
बन्धुर=(૧) મનોજ્ઞ; (૨) મુગટ.
अयासुबन्धुर !=(૧) હે ( સંસારપરિભ્રમણરૂપ ) યાત્રાની પ્રસૂતિથી રહિત તેમજ મનોજ્ઞ ! (૨) ( સંસાર– )યાત્રાના જન્મથી રહિતના મુગટ !; (૩) હે સ્થાયી પ્રાણ વડે મનોહર !; (૪) હે શુભ વિધિ અને પ્રાણથી ચિત્તરંજક !
आ=સમસ્ત રીતે.
राम=મનોહર.
जय=વિજય.
अङ्ग=ઉપાય.
सार=(૧) બળ; (૨) સંપત્તિ.
आरामजयाङ्गसार !=(૧) સમસ્ત રીતે મનોહર એવા વિજયના ઉપાયોરૂપ બળ છે જેનું એવા ! (૨) હે બધી રીતે મનોજ્ઞ એવા વિજયની સામગ્રીની સંપત્તિરૂપ !
सत्=સમુચિત.
अर्घ=અર્ઘ, પૂજાવિધિ.
सदर्घ !=હે સમુચિત અર્ઘવાળા !
मुक्त ( ધા૦ मुच् )=ત્યજી દીધેલ.
मुक्तोपम !=હે ઉપમા રહિત !

१ श्रीहेमचन्द्रीयकाव्यानुशासनटीकायाम् ( પૃ० २१० ) ।

मुक्त ! ( મૂ૦ मुक्त )=હે ત્યજાયેલ !
उप=સમીપ.
मा=લક્ષ્મી.
उपम !=સમીપ છે લક્ષ્મી જેની એવા !
तारकाःः (મૂ૦ तारका)= (૧) આંખની કીકીનું; (૨) દૃષ્ટિનું.

सु=અતિશયતાવાચક અવ્યય.
आराम=ઉદ્યાન, બગીચો.
सुबन्धुराराम !=હે અતિશય મનોહર ઉદ્યાન !
जय ( ધા૦ जि )=તું જય પામ.
अङ्ग=સંબોધનવાચક અવ્યય.
सार ! ( મૂ૦ सार )= હે ઉત્તમ !

## પદ્યાર્થ

"હે શ્રેષ્ઠ મૂલ્યવાળાં મોતીઓની ઉપમાવાળા ( નાથ ) ! હે ( ભવ-સમુદ્રમાંથી પ્રાણીઓને ) તારનાર ! હે ( સંસાર-પરિભ્રમણરૂપ ) યાત્રાની પ્રસૂતિથી રહિત તેમજ મનોજ્ઞ ! [ અથવા સંસાર-યાત્રાથી રહિત જનોના મુગટ !, હે સ્થાયી ( જ્ઞાનાદિક ભાવ )પ્રાણોથી મનોહર ! કે હે લાભ અને ( ભાવ- )પ્રાણોથી ચિત્તરંજક ! ], હે સમસ્ત રીતે મનોહર એવા વિજયના ઉપાયરૂપ બળવાળા ! [અથવા હે બધી રીતે મનોજ્ઞ એવા વિજયની સામગ્રીની સંપત્ત !], હે સમુચિત અર્થવાળા ! હે નિરૂપમ ! [ અથવા હે ( કર્મોથી ) રહિત ! હે સમીપ લક્ષ્મીવાળા ! ], હે આંખની કીકીને [ અથવા દૃષ્ટિને ] અતિશય મનોહર ઉદ્યાન ( સમાન ) ! હે ઉત્તમ ( યોગીશ્વર ) ! તું જય પામ."—૩

## સ્પષ્ટીકરણ

**યમક-વિચાર—**

આ પદ્ય અર્ધાભ્યાસ લક્ષણથી લક્ષિત સમુદ્ગ યમકથી શોભે છે. એનું લક્ષણ **દણ્ડી**ના શબ્દોમાં એ છે કે—

"अर्धाभ्यासः समुद्गः स्यादस्य भेदास्त्रयो मताः"

અર્થાત્ અર્ધાભ્યાસ તે સમુદ્ગ કહેવાય છે અને તેના ત્રણ પ્રકારો સ્વીકારવામાં આવ્યા છે. (૧) પ્રથમ અને દ્વિતીય ચરણોની સમાનતા અને એવી રીતે તૃતીય અને ચતુર્થ ચરણોની અભિન્નતા; (૨) પ્રથમ અને તૃતીય ચરણોની એકતા અને દ્વિતીય અને ચતુર્થ ચરણોની સમતા; અને (૩) પ્રથમ અને ચતુર્થ ચરણોની એકરૂપતા અને દ્વિતીય અને તૃતીય ચરણોની તુલ્યતા. આ ત્રણ પ્રકારો પૈકી અત્ર તેમજ આ પછીના પદ્યમાં દ્વિતીય પ્રકાર નજરે પડે છે, જ્યારે બાકીના પ્રકારો ચતુર્થ પરિશિષ્ટગત કાવ્ય પૂરા પાડે છે, કેમકે એના ચોથા અને નવમા પદ્યમાં તૃતીય પ્રકાર જોવાય છે, ત્યાર પછીના દશમા પદ્યમાં પ્રથમ પ્રકાર કે જેના ઉદાહરણ તરીકે **શિશુપાલ**ના ૧૯ મા સર્ગના ૧૧૮ મા પદ્યનો ઉલ્લેખ કરી શકાય તેમ છે અને અગ્યારમા પદ્યમાં દ્વિતીય પ્રકાર દૃષ્ટિગોચર થાય છે કે જેના ઉદાહરણની ગરજ આ સર્ગનું ૫૮ મું પદ્ય પણ સારે છે.

———:o:———

सत्यागमाऽसारधराऽङ्गनाना-दराधिकन्तोऽलसमाननन्द ।

सत्यागमासारधराङ्ग ! नाना-ऽऽदराधिकं तोल समान ! नन्द ॥४॥ —उप०

## अवचूरिः

सत्यागमेति । सत्यः-प्रमाणप्रतिष्ठितः, आगमः-सिद्धान्तो ज्ञानं वा यस्य सः, तदामन्त्रणे । सारं-धनं, "सारो बले स्थिरांशे च मज्जिन पुंसि जले धने" इति मेदिनिः ( श्लो० ९५ ) । धरा-पृथ्वी, अङ्गना-स्त्री, अनादरः-तिरस्कारः, आधिः-चित्तपीडा, कन्तुः-कामः "कन्तुः कन्दर्पे" इति [1]जिनदेवः । एतेषां द्वन्द्वं विधाय, न विद्यन्ते सारधराङ्गनादराधिकन्तवो यस्य सः, तथोक्तः, तदामन्त्रणे । लसो-विलासः, मानः-अहङ्कारः ताभ्यां नन्दतीति लसमाननन्दः, न लसमाननन्दोऽलसमाननन्दः, क्रीडाहङ्काररहित इति यावत्, तदामन्त्रणे । त्यागेन-दानेन सहिता मा-लक्ष्मीः सत्यागमा " मा मातरि तथा लक्ष्म्याम् " इति सुधाकलशः (श्लो० १४) । तस्याः सारं-सर्वस्वं धरतीति तथोक्तः, तदामन्त्रणे । ' अङ्ग ' इति आमन्त्रणे । नानाऽऽदरेण-विविधसम्मानेन अधिकं-नानाऽऽदराधिकं यथा स्यात् तथा, क्रियाविशेषणमिदम् । तोलयति इति तोलः-वस्तुस्वरूपनिर्णायकः, तदामन्त्रणे । मानेन-ज्ञानेन प्रतिष्ठया वा सह वर्तते इति समानः तदामन्त्रणे । यद्वा तस्य-पुण्यस्य " तश्चौरामृतपुच्छेषु क्रोडे म्लेच्छे च कुत्रचित् । अपुमांस्तरणे पुण्ये कथितः शब्दवेदिभिः" इति मेदिनिः (श्लो० १) । ऊ-रक्षणं "पुंलिङ्ग ऊस्तु रक्षणे" इति सुधाकलशः ( श्लो० ५ ), तत्र लसमानः-शक्रतुल्यः, " लः शक्रे ला तु दाने स्याद् ग्रहणेऽपि निगद्यते" इति मेदिनिः ( श्लो० १ ), तदामन्त्रणे । नन्द-समृद्धिं प्राप्नुहि ॥ ४ ॥

## अन्वयः

अङ्ग सत्य-आगम ! अ-सार-धरा-अङ्गना-अनादर-आधि-कन्तो ! अ-लस-मान-नन्द ! स-त्याग-मा-सार धर ! तोल ! [ त-ऊ-ल ] स-मान ! नाना-आदर-आधिकं [ नाना अ-दर ! अधि-कं ] नन्द ।

## શબ્દાર્થ

सत्य=સાચો.
आगम=(१) આગમ, સિદ્ધાન્ત; (૨) જ્ઞાન.
सत्यागम !=(१)સાચો છે સિદ્ધાન્ત જેનો એવા !; (૨) સાચું છે જ્ઞાન જેનું એવા !
सार=લક્ષ્મી, દ્રવ્ય.
धरा=પૃથ્વી.
अङ्गना=નારી.
अनादर=તિરસ્કાર.
आधि=માનસિક પીડા.
कन्तु=મદન, કામદેવ.
असारधराऽङ्गनाऽनादराधिकन्तो !=અવિદ્યમાન છે લક્ષ્મી, પૃથ્વી, નારી, તિરસ્કાર, માનસિક પીડા અને મદન જેને વિષે એવા !
लस=વિલાસ, મોજશોખ.
मान=અહંકાર.
नन्द=ખુશી થવું.
अलसमाननन्द !=હે વિલાસ અને અહંકારથી આનન્દિત નહિ થનાર !
सह=સહિત.
त्याग=દાન.

---

[1] एतन्मुनिराजप्रणीते अभिधानचिन्तामणिशिलोञ्छे ( का० २, श्लो० १० ) ।

मा=લક્ષ્મી.
सार=સાર, સર્વસ્વ.
धर=ધરનાર, ધારણ કરનાર.
सत्यागमासारधर !=હે દાન સહિત લક્ષ્મીના સારને ધરનાર !
अङ्ग=સંબોધનવાચક શબ્દ.
नाना=વિવિધ.
आदर=આદર, સત્કાર, સન્માન.
अधिक=અધિક, વધારે.
नानाऽऽदराधिकं=વિવિધ આદરથી અધિક એવી રીતે.
दर=ભય.
अदर !=હે નિર્ભય !
अधिकं ( મૂ૦ अधिक )=અધિક.
तोल ! ( મૂ૦ तोल )=હે તુલના કરનાર !
त=પુણ્ય.
ऊ=રક્ષણ.
ल=ઇન્દ્ર.
तोल !=હે પુણ્યનું રક્ષણ કરવામાં ઇન્દ્ર !
मान=(૧) જ્ઞાન; (૨) પ્રતિષ્ઠા.
समान !=(૧) હે જ્ઞાની !; (૨) હે પ્રતિષ્ઠાશાળી !
नन्द ( ધા૦ नन्द् )=તું સમૃદ્ધિ પામ.

## પદ્યાર્થ

"હે સાચા ( પ્રામાણિક ) સિદ્ધાન્તવાળા ! [ અથવા હે સત્યજ્ઞાની ! ] હે લક્ષ્મી, પૃથ્વી, લલના, અનાદર, માનસિક પીડા અને મદનથી વિમુખ ! હે ( વિષયજન્ય ) વિલાસ અને ગર્વથી નહિ ખુશી થનાર ! હે દાન સહિત લક્ષ્મીના સર્વસ્વને ધારણ કરનાર ! હે ( વિવિધ વસ્તુના સ્વરૂપોની ) તુલના કરનાર ! [ અથવા હે પુણ્યનું રક્ષણ કરવામાં ઇન્દ્ર ( સમાન ) ! ] હે જ્ઞાની ! [ અથવા હે પ્રતિષ્ઠાશાળી ! ] હે નિર્ભય ! તું વિવિધ અને અધિક સમૃદ્ધિ પામ [ અથવા તું વિવિધ આદરથી અધિક એવી રીતે ] સમૃદ્ધ થા. "—૪

———:o:———

गुरो ! सदालोकनबालभाल–विभावरीनाथविभाऽस्तभाव ! ।
वामेय ! मे कामितमातनु श्री–गुरो ! सदाऽऽलोकन ! बालभाल ! ॥ ५ ॥

—उप०

## अवचूरिः

गुरो ! इति । हे गुरो !–तत्त्ववादिन् ! सदा आलोकनं–दर्शनं यस्य सः, तथोक्तः भालं–ललाटमेव विभावरीनाथः–चन्द्रः भालविभावरीनाथः, बालश्चासौ भालविभावरीनाथश्च तथोक्तः, सदालोकनश्चासौ बालभालविभावरीनाथश्चेति कर्मधारयः, तस्य विभया–कान्त्या निरस्तो भावः–कामः क्रीडा वा येन सः, " भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु । क्रियालीलापदार्थेषु विभूतिबुधजन्तुषु ॥ " इति मेदिनिः ( श्लो० १०–११ ), तदामन्त्रणे । वामायाः पुमानपत्यं वामेयः, तदामन्त्रणे । मे–मम । बाहुलकादामन्त्रितपदादपि ' मे ' आदेशः, अव्ययं वाऽस्मदेकवचनप्रतिरूपकमिदम् । कामितम्–इष्टम् । आतनु–समन्ताद् विस्तारय । श्रिया–लक्ष्म्या शोभया वा गुरुः–महान् श्रीगुरुः, तदामन्त्रणे । आलोकनमालोकः, ज्ञानरूपः प्रकाश इत्यर्थः, सदा–निरन्तरमालोकनं यस्य सः, तदामन्त्रणे । बालान्–अज्ञान् भालयति–निरूपयति इति बालभालः, उद्धारकबुद्ध्या मूर्खनिरीक्षक इत्यर्थः, तदामन्त्रणे ॥ ५ ॥

## अन्वयः

(हे) गुरो! सत्-आलोकन-बाल-भाल-विभावरी-नाथ-विभा-अस्त-भाव! श्री-गुरो! सदा-आलोकन! बाल-भाल! वामेय! मे कामितं आतनु।

## શબ્દાર્થ

गुरो! (મૂ० गुरु)=હે ગુરૂ!, હે તત્ત્વ-વિવેચક!
सत्=સુન્દર.
आलोकन=અવલોકન, દૃષ્ટિ.
बाल=બાળક.
भाल=લલાટ.
विभावरी=નિશા, રાત્રિ.
नाथ=સ્વામી.
विभा=તેજ.
अस्त (ધા० अस्)=દૂર કરેલ.
भाव=(૧) મદન; (૨) ક્રીડા.
सदालोकनबालभालविभावरीनाथविभाऽस्तभाव! =સુંદર દૃષ્ટિ અને લલાટરૂપ બાલ-ચન્દ્રની પ્રભા વડે પરાસ્ત કર્યો છે ભાવને જેણે એવા!
वामेय! (મૂ० वामेय)=હે વામા (રાણી)ના નન્દન!, હે પાર્શ્વનાથ!
मे (મૂ० अस्मद्)=મારા.
कामितं (મૂ० कामित)=મનોવાંછિતને.
आतनु (ધા० तन्)=તું અત્યંત વિસ્તાર.
श्री=લક્ષ્મી.
गुरु=મહાન્, મોટા.
श्रीगुरो!=હે લક્ષ્મી વડે મોટા!
सदा=સર્વદા.
आलोकन=જ્ઞાન.
सदाऽऽलोकन!=સર્વદા છે જ્ઞાન જેને એવા
बाल=મૂર્ખ.
भाल=જોનાર.
बालभाल!=હે મૂર્ખને જોનાર!

## પદ્યાર્થ

હે તત્ત્વ-વિવેચક (વિભુ)! હે સુંદર દૃષ્ટિ અને લલાટરૂપ બાલ (અષ્ટમીના) ચન્દ્રની પ્રભા વડે મદનને [અથવા (વિલાસમય) ક્રીડાઓને] જેણે પરાસ્ત કરેલ છે એવા હે (યોગિ-નાથ)! હે (જ્ઞાનાદિ અંતરંગ) લક્ષ્મી વડે મોટા (મહેશ)! હે નિરંતર જ્ઞાનવાળા (પ્રભુ)! હે (જગત્નો ઉદ્ધાર કરવાની બુદ્ધિથી) મૂર્ખના નિરીક્ષક! હે વામા-નન્દન! તું મારા વાંછિતનો ચારે બાજુ વિસ્તાર કર."—૫

———:o:———

कल्याण! मालाऽकरणाऽऽधिहारी-कल्याऽणमालाऽकरणाऽऽधिहारी।
कल्याणमालाऽकरणाऽधिहारी, कल्याणमालाः कर णाधिहारी ॥ ६ ॥

—इन्द्रवज्रा

## अवचूरिः

कल्याणेति। कल्यां-शुभां वाणीं अणति-वदतीति कल्याणः, तदामन्त्रणे। मालाः-किरातविशेषाः "मालं क्षेत्रे स्त्रियां पृक्कास्रजोर्जात्यन्तरे पुमान्" इति मेदिनिः (श्लो० ४५)। न विद्यते कं-सुखं यत्र स अकः, "सुखशीर्षजलेषु कम्" इति मेदिनिः (श्लो० १६)। रणो-युद्धं शब्दो वा "रणः कोणे क्वणे पुंसि समरे पुंन-

पुंसकम् " इति मेदिनिः (श्लो० ९८)। अकश्चासौ रणश्च अकरणः, मालानामकरणो मालाकरणः-चौरजनितं दुःखप्रचुरं युद्धं तेषां शब्दो वा त्रासदायकः। आधिः-व्यसनम् "आधिः पुमांश्चित्तपीडा-प्रत्याशाबन्धकेषु च। व्यसने चाप्यधिष्ठाने" इति मेदिनिः (श्लो० ३)। हारिः-द्यूतादिभङ्ग। "हारिः पथिकसन्तानद्यूतादिभङ्गयोः स्त्रियाम्।" इति मेदिनिः (श्लो० १०१)। इः-कामः "इः कामे पुंलिङ्ग इ च" इति सुधाकलशः (श्लो० ३)। कल्यं-मद्यं इरेव कल्यम् इकल्यं-काममदिरा। णस्य-ज्ञानस्य अभावोऽणम्-अज्ञानम् "णः प्रकटे निष्कले च प्रस्तुते ज्ञानबन्धयोः" इति सुधाकलशः (श्लो० ११)। मालं-ग्रामयोरन्तरालाटवी। करणानि-इन्द्रियाणि तेषामभावोऽल्पता वा अकरणम्। मालाकरणश्च आधिश्च हारिश्च इकल्यं च अणं च मालं च अकरणं च मालाकरणाधिहारीकल्याणमालाकरणानि एतेषां सम्बन्धिनः एतज्जनितस्य वा आधेः-चित्तपीडाया हारी-हरणशीलः, तथोक्तः। कल्याणस्य मां-मोक्षस्य लक्ष्मीं, "कल्याणमक्षये स्वर्गे मङ्गलेऽपि नपुंसकम्" इति मेदिनिः (श्लो० ४०), लाति-ददाति इति कल्याणमालः, तदामन्त्रणे। न विद्यते करणं-देहो यस्य सः अकरणः, तदामन्त्रणे, देहरहित इत्यर्थः। अधिकं हारी-मनोहरः-अधिहारी। कल्याणस्य मालाः-मलङ्गस्य श्रेणीः कर-कुरु। भौवादिपाठात् करोतेः पाक्षिके शवि सप्तम्यां मध्यमपुरुषैकवचनान्तक्रियापदमिदम्। णस्य-बन्धस्य अधिहाः-हानं, जिहीतेर्भावे क्विपि अधिहाः, कर्मबन्धहानिरित्यर्थः, तत्र अरि इव-चक्रमिव णाधिहारी। एतादृशस्त्वं कल्याणमालाः कुरु इत्यर्थः॥ ६॥

## अन्वयः

कल्या-अण! कल्याण-मा ल! अ-करण! माल-अ-क-रण-आधि-हारि-इ-कल्या-अण-माल-अ-करणा-आधि-हारी अधि-हारी ण-अधि-हा-अरि कल्याण-मालाः कर।

## શબ્દાર્થ

कल्या=શુભ વાણી, સાબાશી.
अण्=બોલવું, વદવું.
कल्याण !=હે શુભવાણી વદનાર !
माल=માલ, જંગલીઓની એક જાત.
अक=દુઃખ.
रण=(૧) યુદ્ધ; (૨) શબ્દ.
आधि=વ્યસન.
हारि=દ્યૂત વગેરેનો ભંગ.
इ=કામદેવ, મદન.
कल्य=મદ્ય, દારૂ.
अण=અજ્ઞાન.
माल=બે ગામની વચ્ચેનું જંગલ, ખેતર.
अ=(૧) નિષેધવાચક શબ્દ; (૨) અલ્પતા-વાચક શબ્દ.
करण=ઇન્દ્રિય.
आधि=માનસિક પીડા.
हारिन्=હરણ કરવાના સ્વભાવવાળો.

मालाऽकरणाऽऽधिहारीकल्याऽणमालाऽकरणाऽऽधिहारी=(૧) માલ(જનિત) દુઃખરૂપ યુદ્ધ, વ્યસન, દ્યૂતાદિના ભંગ, મદનરૂપ મદ્ય, અજ્ઞાનરૂપ ખેતર, અને ઇન્દ્રિયોના અભાવ સંબંધી આધિને (હરનારો); માલ(જનિત) દુઃખ અને અવાજ, વ્યસન, દ્યૂતાદિના ભંગ, મદનરૂપ મદ્ય, અજ્ઞાનરૂપ ખેતર અને ઇન્દ્રિયોની અલ્પતાથી ઉદ્ભવતી આધિને હરનાર.
कल्याण=મોક્ષ.
मा=લક્ષ્મી.
ला=આપવું.
कल्याणमाल !=હે મોક્ષની લક્ષ્મીને આપનાર !
करण=દેહ.
अकरण !=હે દેહ રહિત !
अधि=અધિકતાવાચક શબ્દ.
हारिन्=મનોહર.

अधिहारी=અધિક મનોહર.
कल्याण=કલ્યાણ, મંગળ.
माला=માળા, શ્રેણિ.
कल्याणमालाः=મંગલ-માલાઓ.
कर ( ધા० कृ )=તું કર.
ण=બન્ધન.
अधिहा=હાનિ, નાશ.
अरि=ચક્ર.
णाधिहारी=બન્ધનનો નાશ કરવામાં ચક્ર (સમાન).

## પદ્યાર્થ

"હે શુભ વાણી વદનાર! હે મુક્તિ-લક્ષ્મીને આપનાર! હે દેહ રહિત! 'માલ' (જનિત) દુઃખરૂપ યુદ્ધ [અથવા દુઃખ અને અવાજ], વ્યસન, ઘૂતાદિના ભંગ, મદનરૂપ મદ્ય, અજ્ઞાનરૂપ ખેતર અને ઇન્દ્રિયોના અભાવ સંબંધી [અથવા ઇન્દ્રિયોની અલ્પતાથી ઉદ્ભવતી) આધિને હરનાર, અધિક મનોહર, તેમજ (કર્મ)બન્ધનનો નાશ કરવામાં ચક્ર (સમાન) એવો તું મંગલ-માલા કર."—૬

## સ્પષ્ટીકરણ

આ પદ્ય પંક્તિ નામના યમકથી અલંકૃત છે, કેમકે એનાં ચારે ચરણો સમાન છે. આવાં અન્ય ઉદાહરણો તરીકે ચતુર્થ પરિશિષ્ટગત કાવ્યના આઠમા પદ્યનો ઉલ્લેખ થઇ શકે તેમ છે. વિશેષમાં આવું એક ઉદાહરણ વાગ્ભટાલંકારની સ્વોપજ્ઞ વૃત્તિ (પૃ० ૩૫) પણ પૂરું પાડે છે, તે નીચે મુજબ છેઃ—

" रम्भारामाऽकुरबककमला-ऽरं भारामाऽकुरबककमला- ।
रम्भा रामाऽकुरबक ! कमला-रम्भारामाऽकुरबककमला ॥ "

આ ભ્રમરવિલસિત છંદમાં રચાયેલા પદ્યના દ્વિતીય ચરણના અન્તિમ પદનો અને તૃતીયન પ્રારમ્ભિક પદનો સમાસ છે એટલે કે દ્વિતીય અને તૃતીય ચરણની વચ્ચે યતિ નથી. આવો પ્રયોગ કવિસમ્પ્રદાયથી સિદ્ધ હોય એ શંકાસ્પદ છે (જોકે આવું એક પદ્ય 'શ્રીભક્તામર સ્તોત્રની પાદ-પૂર્તિરૂપ કાવ્યસંગ્રહ'ના દ્વિતીય વિભાગના ૧૯૦ મા પૃષ્ઠમાં છે) અને એથી આ પદ્યગન્ધી ગદ્ય તો ન હોય એવો તર્ક સ્ફુરે છે.

——:o:——

इत्थं स्तुतं सुयमकैर्यमकैरवेन्दुं, चारूपभूमिरमणीरमणीयहारम् ।
श्रीपार्श्वनाथजिनपं जिनपद्मयाऽऽढ्यं, ध्यायामि भावसहितं सहितं समन्तात् ।७।

—वसन्ततिलका

## अवचूरिः

इत्थमिति । इत्थम्-एवंप्रकारेण स्तुतं-नुतम्, सुयमकैः-महायमकैः । यमाः-नियमा महाव्रतानि या ते एव कैरवाणि-कुवलयानि तेषु इन्दुः-चन्द्रः, तम् । चारूपम्-अणहिलपट्टनतः उत्तरस्यां दिशि चतुःक्रोशदूरवर्ती ग्रामविशेषः, तस्य भूमिरेव रमणी-सुन्दरी तस्या भूषाकृते रमणीयो-मनोहरो

हारो-मुक्तावली, तम् । श्रीपार्श्वनाथजिनपतिम् । जिनस्य-अर्हतः पद्मा-प्रातिहार्यादिलक्ष्मीः, तया आढ्यं-समृद्धम् । 'जिनपद्म' इति वचनेन कविना स्वनामापि सूचितं सम्भवति । ध्यायामि-चिन्तयामि । भावेन-मानसोल्लासेन सहितम् । हितेन सह वर्तमानः सहितः, तम् । समन्तात्-सर्वतः ॥ ७ ॥

'पार्श्व' स्तवनकरण्डं, महायमकमुद्रया निगूढतरम् ।
'कल्याणविजय'मुनिना, भित्त्वा प्रकटीकृतोऽर्थभरः ॥ १ ॥

इति मुनिराजकल्याणविजयविरचिता श्रीपार्श्वनाथजिनस्तवावचूरिः समाप्ता ॥

## अन्वयः

इत्थं सु-यमकैः स्तुतं यम-कैरव-इन्दुं चारूप-भूमि-रमणी-रमणीय हारं जिन-पद्मया आढ्यं स-हितं श्री-पार्श्वनाथ-जिन-पं भाव-सहितं समन्तात् ध्यायामि ।

## શબ્દાર્થ

इत्थं=આ પ્રમાણે.
स्तुतं ( મૂ૦ स्तुत )=સ્તુતિ કરાયેલ.
सु=શ્રેષ્ઠતાવાચક અવ્યય.
यमक=શબ્દાલંકારનો એક પ્રકાર, ઝમક.
सुयमकैः=સુન્દર યમકો વડે.
यम=(૧) નિયમ; (૨) વ્રત.
कैरव=ચન્દ્રમુખી કમળ.
इन्दु=ચન્દ્ર.
यमकैरवेन्दुं=યમરૂપ કૈરવ પ્રતિ ચન્દ્ર.
चारूप=ચારૂપ.
भूमि=સ્થળ.
रमणी=લલના, મહિલા, ભામિની.
रमणीय=મનોહર, ભવ્ય,
हार=હાર.
चारूपभूमिरमणीरमणीयहारं=ચારૂપ ભૂમિરૂપ ભામિનીના ભવ્ય હાર.
श्री=માનવાચક શબ્દ.
पार्श्वनाथ=પાર્શ્વનાથ.
जिनप=જિનપતિ, તીર્થંકર.
श्रीपार्श्वनाथजिनपं=શ્રીપાર્શ્વનાથ તીર્થંકરને.
जिन=અરિહંત, તીર્થંકર.
पद्मा=લક્ષ્મી.
जिनपद्मया=અરિહંતની લક્ષ્મીથી.
आढ्यं ( મૂ૦ आढ्य )=સમૃદ્ધ.
ध्यायामि ( ધા૦ ध्यै )=હું ધ્યાન ધરૂં છું.
भाव=માનસિક ઉલ્લાસ.
सहित=યુક્ત, સાથે.
भावसहितं=માનસિક ઉલ્લાસ સહિત.
सह=સાથે.
हित=કલ્યાણ.
सहितं=કલ્યાણથી યુક્ત.
समन्तात्=સર્વ બાજુથી.

## પદ્યાર્થ

"આ પ્રમાણે સુન્દર યમકો વડે સ્તુતિ કરાયેલા, યમરૂપ કૈરવને ( વિકસિત કરવામાં ) ચન્દ્ર (સમાન), 'ચારૂપ' ભૂમિરૂપ ભામિનીના ભવ્ય હાર (તુલ્ય), આર્હત સંપત્તિ વડે સમૃદ્ધ તથા કલ્યાણથી યુક્ત એવા શ્રીપાર્શ્વનાથ જિનેશ્વરનું હું સર્વ બાજુથી માનસિક ઉલ્લાસ પૂર્વક ધ્યાન ધરૂં છું."—૭

———:o:———

घ-परिशिष्टम् ।

श्रीजिनप्रभसूरिसूत्रितं

# ॥ श्रीअजितजिनस्तोत्रम् ॥

( सटिप्पणकम् )

विश्वेश्वरं [1]मथितमन्मथ*भूपमानं
देवं [2]क्षमाऽतिशयसंश्रितभूपमानम् ।
तीर्थाधिराज'मजितं' [3]'जितशत्रु'जातं
प्रीत्या स्तवीमि यमकै[4]र्जितशत्रुजातम् ॥ १ ॥

टि०—१ दलितकामनृपतिमदम् । २ क्षमाऽतिशयेन–क्षान्त्यतिरेकेण संश्रितं–कलितं भुवः–पृथिव्याः उपमानं–साम्यं येन (तम्)। ३ श्रीजितशत्रुनृपतितनयम्। ४ पराभूतशत्रुसमूहम् ॥१॥

## अन्वयः

विश्व-ईश्वरं मथित-मन्मथ-भूप-मानं देवं क्षमा-अतिशय-संश्रित-भू-उपमानं तीर्थ-अधिराजं जित-शत्रु-जातं ' जितशत्रु '-जातं ' अजितं ' यमकैः प्रीत्या स्तवीमि ।

## શબ્દાર્થ

विश्व=જગત્, દુનિયા.
ईश्वर=ઈશ્વર, સ્વામી, નાથ.
विश्वेश्वरं=દુનિયાના સ્વામીને, જગન્નાથને.
मथित ( ધા૦ मन्थ् )=મથેલ, દળી નાંખેલ.
मन्मथ=કામદેવ, મદન.
भूप=રાજા.
मान=અહંકાર, ગર્વ, મદ.
मथितमन्मथभूपमानं=દળી નાંખ્યો છે મદન રાજાના અહંકારને જેણે એવા.
देवं ( મૂ૦ देव )=દેવને, પરમેશ્વરને.
क्षमा=ક્ષમા, માફી.
अतिशय=અતિરેક, અધિકપણું.
संश्रित ( ધા૦ श्रि )=પ્રાપ્ત કરેલ.
भू=પૃથ્વી.
उपमान=ઉપમા.
क्षमाऽतिशयसंश्रितभूपमानं=ક્ષમાની અધિકતાથી પ્રાપ્ત કરી છે પૃથ્વીની ઉપમા જેણે એવા.
तीर्थ=તીર્થ.
अधिराज=નાથ, ઈશ્વર.
तीर्थाधिराजं=તીર્થના નાથને.
अजितं ( મૂ૦ अजित )=અજિત(નાથ)ને.
जितशत्रु=જિતશત્રુ, અજિતનાથના પિતા.
जात=પુત્ર.

* આ યમક માટે જુઓ ભૂમિકા ( પૃ૦ ૨૧ ) તેમજ આ સ્તોત્રના ૧૪ મા તથા ૧૯ મા પદ્યો. શિશુપાલવધ ( સ. ૧૯ )નું ૯૨ મું પદ્ય થોડે અંશે આ સાથે મળતું આવે છે.

जितशत्रुजातं=જિતશત્રુના પુત્રને.
प्रीत्या ( મૂ૦ प्रीति )=પ્રેમથી.
स्तवीमि (ધા૦ स्तु)=હું સ્તવું છું, હું સ્તુતિ કરૂં છું.
यमकैः ( મૂ૦ यमक )=યમકો વડે, એક જાતના શબ્દાલંકારથી.
जित ( ધા૦ जि )=જીતેલ.
शत्रु=દુશ્મન.
जात=સમુદાય.
जितशत्रुजातं=જીત્યો છે દુશ્મનોના સમુદાયને જેણે એવા.

## પદ્યાર્થ

" જગત્‌ના નાથ એવા, વળી જેણે મદન મહીપતિના મદનું મર્દન કર્યું છે એવા, પરમેશ્વર, ક્ષમાની અધિકતાથી જેણે પૃથ્વીની ઉપમા પ્રાપ્ત કરી છે એવા ( અર્થાત્ પૃથ્વીની જેમ સહનશીલ ), તીર્થના સ્વામી તથા જિતશત્રુ ( નૃપતિ )ના નન્દન એવા (દ્વિતીય તીર્થંકર) અજિત( નાથ )ની હું પ્રેમથી યમકમય સ્તુતિ કરૂં છું. "—૧

———:o:———

[1]विज्ञा नरा [2]गवि [3]कलङ्कदशां [4]तमोह !
[5]विज्ञानरागविकलं [6]कंद ! [7]शान्तमोह ! ।
त्वामुल्लसत्पुलकपक्ष्मलदेहदेशाः
सम्यक् प्रणम्य न लभन्ति कदाचनापि ॥ २॥

टि०—१ विज्ञाः–विचक्षणाः । २ गवि–पृथिव्याम् । ३ कलङ्कदशां–कलङ्कावस्थाम् । ४ हे तमोह ! । ५ विशिष्टज्ञानं रागरहितम् । ६ कं–सुखं ददातीति कदः । ७ उपशान्तमोह ! । ८ उल्लसद्रोमाञ्चकञ्चुकितदेहावयवाः । ९ न प्राप्नुवन्ति ॥ २ ॥

## अन्वयः

( हे ) तमस्–ह ! वि–ज्ञान–राग–विकलं क–द ! शान्त–मोह ! त्वां सम्यक् प्रणम्य उल्लसत्–पुलक–पक्ष्मल–देह–देशाः विज्ञाः नराः गवि कलङ्क–दशां न कदाचन अपि लभन्ति ।

## શબ્દાર્થ

विज्ञाः ( મૂ૦ विज्ञ )=વિચક્ષણ, ચતુર.
नराः ( મૂ૦ नर )=મનુષ્યો.
गवि ( મૂ૦ गो )=પૃથ્વી ઉપર.
कलङ्क=કલંક, લાંછન.
दशा=દશા, અવસ્થા.
कलङ्कदशां=કલંકની દશાને.
तमस्=અજ્ઞાન.
हन्=હણવું, અન્ત આણવો.
तमोह !=હે અજ્ઞાનનો અન્ત આણનાર !
विज्ञान=વિશિષ્ટ જ્ઞાન, કેવલજ્ઞાન.
राग=રાગ, સ્નેહ.
विकल=રહિત.
विज्ञानरागविकलं=વિશિષ્ટ જ્ઞાન સહિત અને રાગ રહિત.
क=સુખ.
दा=આપવું.

